


# मैगी क्लब् निः शुल्कं उपहारान् वितरति आनन्द-सन्दोहं प्रापयति!


'मैगी ऑपरेशन वाइल्डलाइफ गेम' इत्यनेन साधं वन्यजीवान् संरक्षन्तु।



'मैगी किंग ऑफ् दी जंगल गेम'

आगच्छन्तु बालाः! मैगीक्लबे प्रविशन्तु, वर्षं यावत् आनन्दं अनुभवन्तु। वृत्तपत्राणि, उपहाराः, क्रीडकानि, आमोद-प्रमोदस्य अनेकानि साधनानि।

भवन्तः एतत् मैगी नूडल्स्-पुटकानां पञ्चानां रिक्त-आवरणानां मुखपृष्ठात् निस्काष्य अस्मान् प्रेषयन्तु। सहैव स्वीयं नाम-धाम, स्वेष्टं उपहारं च लिखन्तु। अपि च, यदि भवान् मैगी-क्लब्-सदस्यः नास्ति चेत्, अनुपमोऽयं अवसरः। उपरितन-विवरणप्रेषण-काले सदस्यतायै लिखन्तु। वयं भवतः उपहारेण सह निःशुल्कं मैगी-क्लब्-सदस्यता-पत्रं प्रेषयिष्यामः।


'मैगी जादू जंगल



मैगी बर्ड-हाउसं विरचयन्तु।



आर्ची-प्रहसनं!

*अस्माकं संकेतः*
**मैगी क्लब्**
पो. ओ. बॉक्सः 5788,
नई दिल्ली-110 055



निः शुल्कं! मैगी "वर्ल्ड ऑफ एनीमल्स्" – प्रश्नोत्तर-पुस्तिका.

भवान् यत् उपहारत्रयं संचेष्यति तेन सार्धं निःशुल्कं 'वर्ल्ड ऑफ एनीमल्स्' – प्रश्नोत्तर-पुस्तिका, वन्य-प्राणिनां विषये रुचि-वर्धिका तथ्योद्घाटिका च। प्रत्येकमपि क्रीडाविषये विस्तरं अवधानेन परीक्ष्यताम्।







अपरोऽपि प्रस्तावः – नाद्युनावधि "लॉज् ऑफ दी जंगल गेम" अधिगतम्, चेत्तदपि आददातु।




लालाला...लालाला...
भारतस्य अपूर्व स्वादुतमं मण्डबहुलं
स्वप्नमधुरं चॉकोलेटम् अत्र संप्राप्तम्

कॅम्पको मण्डयुक्तं क्षीरजं चॉकोलेटम् ।
चारुतम निर्गमन-गुण कोकोयुक्त
संवलितम् अस्य
चॉकोलेटस्यास्वादो तथा
प्रचुरो बहुलश्च यथा
हृदयभवत्रयं सुतरां
नर्तयेत् ।




**भारतस्य विशालतम**
**नूतनतम संयन्त्रात्**

कॅम्पको लिमिटेड मंगळूर









R K SWAMY/BBDO CL 9320SAN

# वाक्यजिज्ञासा – ५

(चिन्तनार्हविषययुक्तं वाक्यं, स्थूलाक्षरैः मुद्रितम् उपरि भवति। तस्य अधः तत्सम्बद्धं विवरणं भवति। ततः अन्यत् वाक्यं, पुनः विवरणम्। एवम् अत्र क्रमः।

विवरणसन्दर्भे प्रथमं साररूपेण किञ्चित् उच्यते। अनन्तरं तस्य स्पष्टज्ञानार्थं शास्त्रीयं विवरणम् अपि दीयते। शास्त्रीयविवरणस्य ज्ञाने केचन क्लेशम् अनुभवेयुः। तादृशाः, वाक्येन वाक्यद्वयेन वाक्यैः वा प्रथमं दत्तं सारभागं पश्यन्ति चेदपि अलम्। तावता एव 'किं शुद्धम्' इति ज्ञायते। 'किमर्थम् एवम्' इति ये ज्ञातुम् इच्छन्ति तादृशानां कृते अग्रिमं विवरणम्।)

२२. **भवन्तः यः कोऽपि आगच्छन्ति वा?**

○ 'भवन्तः' इति प्रथमाविभक्तिप्रयोगः 'आगच्छन्ति' इति बहुवचनप्रयोगश्च अत्र दोषाय। '**भवत्सु** यः कोऽपि **आगच्छति** वा?' इति प्रयोगः साधुः। जातिगुणक्रियासंज्ञादिभिः समुदायात् एकदेशस्य पृथक्करणं यतः भवति ततः *सप्तमी (षष्ठी वा) भवति। प्रकृते च पृथक्करणसन्दर्भः दृश्यते। अतः सप्तमी षष्ठी वा प्रयोक्तव्या, न प्रथमा। 'आगच्छति' इत्यस्य अन्वयः 'यः कोऽपि' इत्यनेन। अतः एकवचनप्रयोगः।

२३. **एतस्मिन् विषये विवरं पत्रं लिखतु।**

○ 'विवरम्' इत्यस्य प्रयोगः अस्थाने। विवरशब्दस्य अर्थः 'रन्ध्रम्' इति। तादृशः अर्थः प्रकृते न अभिप्रेतः। '**सविवरणम्**' इति, '**विस्तरेण**' इति, '**विस्तृतम्**' इति वा प्रयोगः उचितः स्यात्। 'सविवरणम्' इति क्रियाविशेषणम्। विवरणेन सह यस्मिन् कर्मणि तद्यथा भवति तथा इति विग्रहः। लेखनक्रियायां तस्य अन्वयः। 'विस्तरेण' इति तृतीयान्तस्य पदस्य अन्वयः अपि क्रियया एव। 'प्रकृत्यादिभ्यः उपसङ्ख्यानम्' (वा-१४६६) इति वार्तिकबलात् तृतीया। 'विस्तृतम्' इति पदं तु द्रव्यवाचि। पत्रशब्दस्य विशेषणम्।

२४. द्वित्रिमासेभ्यः एतत् कार्यं प्रचलति।

○ '**द्वित्रमासेभ्यः**' इति प्रयोगः साधुः। 'द्वित्रिः' इति रूपम् असाधु। 'द्वौ वा त्रयो वा' इति विग्रहे, वार्थे बहुव्रीहिः। द्वित्र्यन्यतरा इति तात्पर्यम्। 'बहुव्रीहौ सङ्ख्येये

---

* यतश्च निर्धारणम्–२.३.४१.

डजबहुगणात्' (५.४.७३) इति सूत्रेण डच्प्रत्ययः। डच्प्रत्यये कृते त्रिशब्दोत्तरं स्थितस्य इकारस्य (टिसंज्ञकत्वात्) लोपो भवति। तदा द्वित्राः इति रूपं सिद्ध्यति। द्वित्राः च ते मासाः च द्वित्रमासाः, तेभ्यः द्वित्रमासेभ्यः। ''बहुव्रीहौ....'' इति सूत्रेण विहितस्य डच्प्रत्ययस्य नित्यत्वात् 'द्वित्रिः' इति रूपं तु कथमपि न भवति।

**२५. व्याघ्रस्य घोरेण आकारेण भीतः सः पलायितवान्।**

o '**घोरात् आकारात्** भीतः' इति प्रयोक्तव्यम्। 'भीत्रार्थानां भयहेतुः' (१.४.२५) इति सूत्रेण भयहेतोः अपादानसंज्ञा विहिता। ततः पञ्चमी। प्रकृते वाक्ये घोरः आकारः भयहेतुः। अतः तस्मात् शब्दात् पञ्चमी एव उचिता, न तु तृतीया। प्रादेशिकभाषाप्रभावकारणतः, चिन्तनाभावात् वा भ्रान्त्या भयहेतोः तृतीया प्रयुज्येत।

**२६. सन्तुष्टा देवी उत्तमं वरम् अनुगृहीतवती।**

o '**उत्तमेन वरेण** अनुगृहीतवती' इति प्रयोगः उचितः। अनुपूर्वकः ग्रहधातुः सकर्मकः। प्रकृते वाक्ये अनुग्रहकर्त्री देवी। अनुग्रहक्रियायाः कर्म भक्तः। तच्च कर्म अत्र न प्रयुक्तम्। वरः अत्र साधनम्। अतः तस्य तृतीया एव युक्ता, न तु द्वितीया।

'सः मां विषयं निवेदयति' इत्यादिषु वाक्येषु कर्मद्वयं श्रूयते। यतः निवेदयतिप्रभृतयः द्विकर्मकाः। द्विकर्मकस्थले एकम् एव कर्म उपयुज्य वाक्यं रच्यते चेदपि न दोषः। अतः 'सः मां निवेदयति' 'सः विषयं निवेदयति' इति उभयथा प्रयोगः कर्तुं शक्यः। वाक्यद्वये अपि अन्यतरस्य कर्मणः अध्याहारः क्रियते।

पूर्वप्रस्तुते वाक्ये तु अनूपसर्गपूर्वकः ग्रहधातुः (अनुगृह्णाति) न द्विकर्मकः। उपादाने अनुपादाने वा भक्तस्य एव कर्मत्वम्। कर्मणः अनुपादाने वरशब्दस्य (साधनभूतस्य) कर्मत्वम् इति कुत्रापि न उक्तम्। अतः तस्य द्वितीया न भवति।*

* करणस्य वरस्य कर्मत्वेन विवक्षा कृता चेत् 'वरम् अनुगृह्णाति' इति प्रयोगः अपि साधुः स्यात् इति वादम् उपस्थापयितुं शक्यते। तदा तु 'अनुगृह्णति' इत्यस्य अर्थस्य सुसूक्ष्मं विश्लेषणं करणीयम्। एतद्विषये प्राचीनप्रयोगः अपि अन्वेष्टव्यः। अतः चर्चाधीनः, चिन्तनाधीनः च एषः विषयः इति एतावत् वक्तुं शक्यते सद्यः।

Ekco®

# MARKERS

प्राप्याश्चतुर्विंशतेः संघाते।

नव्यतमं तत्! सुचारुस्वरूपम्! विविधेषु सूज्ज्वलवर्णेषु च!

लक्षशः अंकनिकसंचाःअमेरिकायाः संयुक्तगणराज्येषु निर्याप्यन्ते!




भारतेऽग्रिमा निर्मातारः निर्यातकाश्च।

प्रिसिजन रायटिंग पॉईन्टस प्रा. लि. १८, सुभाषमार्गः विलेपार्ले (पूर्व), मुंबापुरी ४०० ०५७

SureShot/336/Sans.




# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

## सत्यस्य अन्वेषणम्

अक्टोबर्मासः यदा उपस्थितः भवति तदा गान्धिवर्यस्य जन्मदिनाचरणं स्मरति देशः। गान्धिनाम्ना बहवः कार्यक्रमाः प्रचाल्यन्ते बहुभिः। एतस्य गान्धिमहात्मनः पर्यायपदम् इव अस्ति 'सत्याग्रह'शब्दः।

विंशतितमशतकस्य आदिमे दशके मोहनदास करमचन्द गान्धिः दक्षिणाफ्रिकादेशे न्यायवादी आसीत्। तस्मिन् देशे या वर्णभेदनीतिः प्रचलति स्म, तां विरुध्य क्रियमाणस्य व्यवहारस्य नायकत्वम् एतेन तत्र निरूढम्। एषः कश्चन 'सौम्यः विरोधक्रमः' इति तेन वर्णितम्।

यदा सः भारतम् आगतः तदा अत्र विदेशीयशासनं विरुध्य जनैः स्वातन्त्र्यान्दोलनं क्रियमाणम् आसीत्। गान्धिः एतस्य आन्दोलनस्य नायकः जातः। तत् असहकारान्दोलनम् इति प्रसिद्धम् अभवत्। एतत् एव 'सत्याग्रह' नाम्ना निर्दिष्टं गान्धिवर्येण।

सत्यनिमित्तकः आग्रहः– भावनातीव्रविशेषः– 'सत्याग्रहः' इति उच्यते। एषः शब्दः वैयक्तिकं प्रयत्नं, क्रियायाः उदात्ततां च प्रतिपादयति। अहिंसायाः एतस्य पदस्य च साक्षात् न कोऽपि सम्बन्धः। गान्धीजी एतस्य शब्दस्य गभीरम् अर्थं कल्पयितुम् इच्छन् आत्मशक्तिपदेन अपि व्यवहृतवान्। आत्मा उत्तेजितः चेत्, आत्मशक्तिः अभिवर्धिता चेत्, साधयितुम् अशक्यं किमपि नास्ति इति तेन प्रमाणीकृतम्।

दौर्भाग्यं नाम, स्वातन्त्र्यप्राप्तितः आरभ्य जनाः सत्याग्रहतत्त्वस्य उपयोगं हिंसात्मकमार्गेण कुर्वन्तः सन्ति। किन्तु एषः मार्गः महात्मना अभिप्रेतः सर्वथा न। समस्या या काऽपि स्यात् नाम, तस्याः तत्त्वम् अन्विष्टं चेत्, तस्याः मूलस्य विवेचनं कृतं चेत्, परिहारमार्गः प्रयत्नसाध्यः भवति एव।

सम्पुटः–८ अक्टोबर्–१९९१ सञ्चिका–७

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००




# कम्बोडियादेशे शान्तिस्थापना

कम्बोडियादेशे गतेभ्यः द्वादशभ्यः वर्षेभ्यः यत् अन्तर्युद्धं प्रचलत् आसीत् तत् इदानीं समाप्तप्रायम् अस्ति। अत्र संयुक्तराष्ट्रसङ्घस्य पात्रं महत्त्वपूर्णम्। कम्बोडियादेशे विप्लवकारिणः त्रयः पक्षाः सन्ति। संयुक्तराष्ट्रसङ्घेन यः शान्तिप्रयत्नः आरब्धः तस्य परिणामतः ते त्रयः अपि पक्षाः 'सुप्रीम् नेषनल् कौन्सिल्' नामिकायां सभायां भागग्रहणम् अङ्गीकृतवन्तः सन्ति।

कम्बोडियादेशस्य अपरं नाम कम्पूचिया इति। पूर्वम् एषः देशः इण्डोचीना-फ्रेञ्चदेशयोः अधीनः आसीत्। द्वितीय-जागतिकयुद्धसन्दर्भे जपानदेशेन एषः देशः स्वायत्तीकृतः। किन्तु १९४५ तमे वर्षे यदा जपानदेशेन पराजयः प्राप्तः तदा पुनरपि एषः देशः फ्रेञ्चदेशस्य अधीनः जातः। १९५६ तमे वर्षे एतस्मात् फ्रेञ्चजनाः निर्गताः। अतः एषः देशः स्वतन्त्रः जातः।

स्वातन्त्र्यप्राप्त्यनन्तरं सिहानौकः शासनभारं निरूढवान्। १९७० तमे वर्षे लाननोलः विद्रोहकृत्येन सिहानौकं पदच्युतं कृत्वा स्वयं सिंहासनारूढः जातः। सिहानौकः देशं परित्यज्य पलायितवान्। इतः पञ्चानां वर्षाणाम् अनन्तरं खेमर्‌रौगस्य नायकत्वे

गेरिल्लाजनाः अधिकारसूत्राणि गृहीतवन्तः। किन्तु एतेषां शासनम् अपि दीर्घकालं यावत् न प्रवृत्तम्। बुभुक्षाजनितानि मरणानि हननकृत्यानि च तत्र असङ्ख्यानि प्रवृत्तानि। अतः प्रतिवेशिना वियेट्नांदेशेन १९७९ तमे वर्षे सेनां सम्प्रेष्य एषः देशः स्वाधीनीकृतः, हेङ्ग् सामरिन्वर्यस्य शासनम् आरब्धम्। किन्तु यदा वियेट्नांदेशेन प्रतिगतं तदा पुनरपि अन्तर्युद्धानि आरब्धानि। द्वादशवर्षाणि यावत् प्रवृत्तानि च। अतः कृषिप्रधानस्य एतस्य देशस्य आर्थिकी स्थितिः नितरां शोचनीया जाता।

इण्डोनेशियादेशस्य राजधान्यां जकार्तायां थायूल्याण्डदेशे च प्रवृत्तायाः चर्चायाः परिणामतः विप्लवकारिषु त्रिषु पक्षेषु सन्धिः जातः। सिहानौकः, खेमररौगः, खेमर् पीपल्स् लिबरेशन् फ्रण्ट् नायकः च 'सुप्रीम् नेषनल् कौन्सिल्' व्यवस्थायाम् अवकाशं प्राप्तवन्तः। इतः परं प्रिन्स् सिहानौकः अध्यक्षपदम् अलङ्करिष्यति। इदानीन्तनः प्रधानमन्त्री हन्सेन् उपाध्यक्षः भविष्यति।

सिहानौकेन उक्तम् अस्ति यत् अहं नवेम्बर्मासे स्वदेशं प्रत्यागमिष्यामि इति। अतः ततः पूर्वम्-अगस्ट्मासे – सुप्रीम् नेषनल् कौन्सिल् समावेशः थायूल्याण्ड्-देशस्य राजधान्यां बाङ्काक्नगरे प्रचलिष्यति।

प्राचीनकालतः अपि भारतस्य एतस्य देशस्य च मैत्री आसीत्। प्रपञ्चस्तरे अतिविशालत्वेन प्रख्यातम् 'आङ्गकरवाट्' नमकं प्राङ्गणं कम्बोडियादेशे एव अस्ति। द्वादशे शतके निर्मितम् इति भाव्यमाने एतस्मिन् सुविशाले प्राङ्गणे बौद्धमन्दिराणि, बौद्धेतर- हिन्दूमन्दिराणि च सन्ति। किन्तु एतानि मन्दिराणि शिथिलावस्थाम् आपन्नानि सन्ति। प्राचीने काले आङ्गकर-प्रदेशः खेमरसाम्राज्यस्य राजधानी आसीत्।





# श्रेष्ठः बुद्धिमान्

भरतपुरे पूर्वं कश्चन भूस्वामी आसीत्। 'भूव्यवहारे साहाय्यं कर्तुं कश्चित् अपेक्षितः। तादृशः परीक्ष्य स्वीकरणीयः' इति चिन्तितवान् भूस्वामी।

भूस्वामिनः एतं विचारं ज्ञात्वा वीरवरः नाम कश्चन युवकः भूस्वामिनं द्रष्टुम् आगतवान्। तस्य नाम-कुलादिकं पृष्ट्वा भूस्वामी उक्तवान्– "भवतः बुद्धिमत्ता विवेकः च मम अपेक्षया अपि अधिका इत्यंशः प्रमाणीकृतः भवति चेत् भवन्तम् उद्योगे नियोजयिष्यामि। एतदर्थं भवता त्रीणि कार्याणि करणीयानि। तत्र प्रथमं कार्यं नाम– एतस्मिन् एव ग्रामे निवसतः रामचन्द्रात् ऋणधनं सङ्गृह्य आनेतव्यम्। सः वर्षद्वयात् पूर्वं मत्तः द्विशतं रूप्यकाणि ऋणरूपेण स्वीकृतवान् आसीत्। इदानीं तु 'ऋणं न प्रत्यर्पयामि' इति, अन्येषां पुरतः वदन् सञ्चरति सः। ततः तावत् धनं प्राप्तुम् अद्यापि न शक्तं मया। अतः भवता एतत् कार्यं साधनीयम्। एतत् साधितं चेत् अन्यत् कार्यद्वयम् अनन्तरं वदिष्यामि" इति।

तदा वीरवरः– "किञ्चित्कालानन्तरं भवान् रामचन्द्रस्य गृहम् आगच्छतु। ऋणरूपेण दत्तं धनं भवान् तदा प्रतिप्राप्स्यति" इति उक्त्वा रामचन्द्रगृहं गतवान्।

वीरवरः स्वपरिचयम् उक्त्वा प्रार्थितवान्– "श्रीमन्! महति कष्टे पतितः अस्मि। भवता यदि द्विशतं रूप्यकाणि दीयेरन् तर्हि अहं जीवितः भवेयम्। प्रतिमासं प्रतिशतं दश रूप्यकाणि वृद्धिम् अपि दास्यामि। व्यवहारपत्रे हस्ताङ्कनम् अपि करोमि" इति।

'अधिका वृद्धिः प्राप्यते' इति सन्तुष्टः



रामचन्द्रः द्विशतं रूप्यकाणि वीरवराय दत्त्वा– "एतत् गणयतु। तावता अहम् ऋणव्यवहारपत्रं सज्जीकरिष्यामि" इति उक्त्वा ऋणपत्रं सज्जीकर्तुम् उद्युक्तः।

तावता भूस्वामी तत्र आगतः। भूस्वामिनं दृष्ट्वा रामचन्द्रः आश्चर्यचकितः। वीरवरः अपि सम्भ्रान्तिं प्रदर्शयन्– "श्रीमन्! अहम् एतस्य साहाय्यकः। ऋणधनसङ्ग्रहार्थम् एतेन अहं प्रेषितः। किन्तु अहं स्वकार्यं विस्मृत्य अन्यत् एव कुर्वन् आसम्" इति रामचन्द्रम् उक्त्वा– "श्रीमन्! एतानि द्विशतं रूप्यकाणि स्वीकरोतु। ऋणधनं प्रतिप्राप्तं खलु?" इति भूस्वामिनम् उक्तवान्।

विनायासं प्राप्तं धनं दृष्ट्वा भूस्वामी आश्चर्यचकितः। तावता रामचन्द्रः साररहितं हासं प्रदर्शयन्– "वीरवर! भूस्वामिनः ऋणं प्रत्यर्पणीयम् इति उद्देशेन एव एतत् धनं स्थापितम् आसीत्। तावता भवान् आगत्य कष्टं निवेदितवान्। करुणया अहं दातुम् उद्युक्तः। इदानीम् ऋणव्यवहारः समाप्तः। किन्तु भवते दातुम् अल्पम् अपि धनं नास्ति मम समीपे" इति उक्तवान्।

"चिन्ता नास्ति श्रीमन्। अन्यतः ऋणं प्राप्स्यामि अहम्" इति उक्त्वा ततः निर्गतवान् वीरवरः।

वीरवरस्य प्रथमकार्येण सन्तुष्टः भूस्वामी द्वितीयं कार्यम् उक्तवान्– "मम गृहद्वयम् अस्ति। एकत्र अहं निवसामि। अन्यत् भाटकरूपेण दत्तम्। तत्र सूर्यनारायणः नाम गृहस्थः निवसति। आगामिमासे मम पुत्री जामाता च एतं ग्रामम् आगत्य अत्रैव स्थास्यतः। तयोः वासार्थं तत् गृहं मह्यम् आवश्यकम्। किन्तु सूर्यनारायणः तत् गृहं त्यक्तुं न सिद्धः। भवता तत् गृहं कथमपि रिक्तीकारणीयम्" इति।

वीरवरः एतत् अङ्गीकृत्य सूर्यनारायणस्य गृहं गत्वा मधुरैः वचनैः वार्तालापं कृतवान्। तस्मात् तेन ज्ञातं यत् सूर्यनारायणः प्रामाणिकः एव इति। 'गृहं त्यक्तव्यम्' इति वचनं रूक्षरीत्या उक्तवान् आसीत् भूस्वामी। अतः एव कुपितः सूर्यनारायणः निश्चितवान् यत् गृहं कथमपि

न त्यक्तव्यम् इति। पूर्वतननिश्चयानुगुणम् इतोऽपि वर्षद्वयं यावत् तत्र वासं कर्तुम् अधिकारः अस्ति सूर्यनारायणस्य। तादृशं व्यवहारपत्रं तस्य समीपे अस्ति।

द्वित्रेषु दिनेषु एव वीरवरः सूर्यनारायणगृहस्य मैत्रीं सम्पादितवान्। यदा यदा तत् गृहं गच्छति तदा तदा मधुरादिकं नयति। सः सर्वेषां गृहसदस्यानां प्रियः जातः।

अत्रान्तरे वीरवरः तद्ग्रामीणं धनिकं दृष्ट्वा– "श्रीमन्! मम मित्रं सूर्यनारायणः भाटकगृहस्य अन्वेषणे अस्ति। भवदीयम् एकं गृहं रिक्तम् अस्ति इति श्रुतं मया। तत् भाटकार्थं ददाति वा?" इति।

एतं प्रस्तावं श्रुत्वा धनिकः नितरां सन्तुष्टः। बहोः कालतः तदीयं गृहं रिक्तम् आसीत्। अतः सः गृहं भाटकरूपेण दातुं सिद्धः जातः।

"श्रीमन्, सूर्यनारायणस्य विचित्रः स्वभावः। यदा मनसि इच्छा उत्पन्ना भवेत् तदा एव कार्यं सम्पन्नं भवेत्। अतः इदानीम् एव भवान् भाटकगृहस्य कुञ्चिकां ददाति चेत् वरम्" इति उक्त्वा कुञ्चिकां स्वीकृत्य एव ततः निर्गतवान् वीरवरः।

अनन्तरं सूर्यनारायणस्य गृहं गत्वा उक्तवान्– "एतस्मिन् गृहे पिशाचपीडा अस्ति इति श्रूयते। पिशाचपीडा कदाचित् न्यूना भवति, कदाचित् तीव्रा। एतत् ज्ञात्वा अपि अत्र वासः न उचितः। भवन्तः मम वचनं



न तिरस्कुर्युः इति आलोच्य अहं भवतां निमित्तं धनिकस्य भाटकगृहं निश्चित्य कुञ्चिकाम् अपि आनीतवान् अस्मि। भवन्तः तत्र गच्छन्तु। एतेन भवताम् एव श्रेयः" इति।

'हितचिन्तकस्य वीरवरस्य कथनम् अङ्गीकृतं चेदेव वरं स्यात्' इति गृहसदस्यानां विचारः। किन्तु सूर्यनारायणः एतं प्रस्तावं निराकुर्वन् उक्तवान्– "अहम् एतत् गृहं तु त्यक्तुं न सिद्धः। भूस्वामिना लिखित्वा दत्तं पत्रं मम समीपे अस्ति। अतः सः इतोऽपि वर्षद्वयं यावत् माम् इतः प्रेषयितुं न अर्हति" इति।

वीरवरः तेन दर्शितं पत्रं दृष्ट्वा पठित्वा– "भवतां हितार्थं मया एतावत् उक्तम्। एतस्य



अङ्गीकारः तिरस्कारः वा भवताम् अधीनः" इति उक्त्वा सर्वेभ्यः मधुरखाद्यं दत्त्वा ततः निर्गतवान्।

वीरवरेण मधुरखाद्ये मूर्च्छाजनकम् औषधं योजितम् आसीत्। अतः सूर्यनारायणः तद्गृहसदस्याः च मूर्च्छिताः जाताः।

वीरवरः भूस्वामिनः साहाय्येन शकटं कर्मकरान् च आनाय्य सूर्यनारायणं, तद्गृहसदस्यान्, तद्गृहीयाणि वस्तूनि च धनिकगृहं प्रापितवान्। गृहसदस्यान् तत्र सम्यक् शायितवान्। भूस्वामिगृहं भूस्वामिना प्राप्तम्। सः गृहसदस्यान् तत्र स्थातुं सूचयित्वा कानिचन वस्तूनि अपि आनीय संस्थाप्य गृहं स्वाधीनं कृतवान्।

सूर्यनारायणस्य हस्ते स्थितं भाटकगृहसम्बन्धि व्यवहारपत्रं छित्त्वा क्षिप्तवान् आसीत् वीरवरः। सचेतनतां प्राप्य सूर्यनारायणः अन्यगृहे स्थितिं ज्ञातवान्। वञ्चना अपि स्फुटं ज्ञाता। तथापि सः किमपि कर्तुं न शक्तवान्।

वीरवरस्य द्वितीयेन कार्येण अपि सन्तुष्टः भूस्वामी पुनः उक्तवान्– "भवता मम पत्नी एकं दिनं यावत् मौनं यथा तिष्ठेत् तथा करणीयम्। एतत् कर्तुं बहुधा प्रयत्नं कृत्वा अहम् असाफल्यं प्राप्तवान्। अतः एतत् प्रयत्नेन साधयतु तावत्" इति।

वीरवरः तस्मिन् एव दिने सायङ्काले भूस्वामिनः पत्न्यैः एकं तायकं दत्त्वा उक्तवान्– "अम्ब! एतत् विशिष्टं तायकम्। महायोगीश्वरेण एतत् अभिमन्त्र्य दत्तम्। एतत् भवत्या वामहस्तेन धृतं चेत् भवत्याः वैभवं प्रतिदिनं वर्धिष्यते। तदा सर्वे भवतीम् आदरातिशयेन द्रक्ष्यन्ति। किन्तु एतत् धृत्वा एकं दिनं यावत् मौनव्रतम् आचरणीयं भवत्या। किमपि सूचनीयं चेदपि तत् हस्तादिसङ्केतेन एव, न तु वचनेन। एवं करोतु, भवती अद्वितीया भविष्यति" इति।

'तायकं धृत्वा मौनव्रतम् आचरितं चेत् मम न काऽपि हानिः' इति आलोच्य सा मौनव्रतम् अङ्गीकृतवती।

अतः सा तायकं धृत्वा एकं दिनं यावत् मौनव्रतम् आचरितवती। उपायेन कार्यं साधितवतः वीरवरस्य कार्यकौशलं दृष्ट्वा

भूस्वामी सन्तुष्टः। सः वीरवरम् उक्तवान्– "भवतः कार्येण अहं सन्तुष्टः। भवान् आत्मानं बुद्धिमन्तं भावयेत्। किन्तु भवद्द्वारा उपायेन कार्यं कारितवतः मम बुद्धिमत्ता एव भवतः बुद्धिमत्तायाः अपेक्षया श्रेष्ठा। बुद्धिमान् कार्यकरणात् पूर्वं प्रतिफलप्राप्त्युपायम् अपि चिन्तयेत्। किन्तु भवता तथा न चिन्तितम्। अतः मम अपेक्षया अपि बुद्धिमत्तया अवराय भवते मया उद्योगः दातव्यः नास्ति" इति।

"श्रीमन्! भवतः अन्तरङ्गे एकम् अस्ति। किन्तु वचनेन भवान् अन्यत् एव निरूपयन् अस्ति। 'मदपेक्षया अधिकबुद्धिमान् उद्योगे नियोजितः चेत् मम बुद्धिमत्तायाः अपमाननं स्यात्' इति आलोच्य भवान् मह्यम् उद्योगदानं निराकुर्वन् अस्ति। एतादृशात् भवत्तः अहम् उद्योगं न इच्छामि" इति धैर्येण उक्तवान् वीरवरः।

तदा भूस्वामी– "भवान् मदपेक्षया श्रेष्ठः बुद्धिमान् इति अङ्गीकृतं मया। वस्तुतस्तु मया सूच्यमानासु परीक्षासु यः अनुत्तीर्णः भवति तादृशाय एव उद्योगः दातव्यः इति मम सङ्कल्पः आसीत्" इति उक्तवान्।

तावता भूस्वामिनः पुत्री विमला बहिः आगत्य पितरम् उक्तवती– "तात! 'मदपेक्षया यः श्रेष्ठः बुद्धिमान् भवति तस्मै भवतीं ददामि' इति माम् उक्तवान् आसीत् खलु भवान्? इदानीं तादृशः लब्धः अस्ति। आवां परस्परम् अनुरक्तौ। भवता सूचितासु परीक्षासु साफल्यं प्राप्नुवता एतेन स्वश्रेष्ठता प्रदर्शिता। अतः इदानीम् आवयोः विवाहस्य निर्वर्तनम् उचितम्" इति।

"वीरवर! अहो बुद्धिमत्ता भवतः! कार्यप्रवृत्तितः पूर्वम् एव महत् फलं प्राप्तम् एव भवता! परस्परम् अनुरक्तयोः भवतोः विवाहं निश्चयेन निर्वर्तयिष्यामि अहम्" इति उक्तवान् भूस्वामी।

अनन्तरं वीरवर-विमलयोः विवाहः सवैभवं सम्पन्नः। भूस्वामिनः जामाता सन् वीरवरः सुखेन जीवितवान्।



# अन्तिमं दर्शनम्

पूर्वं देवव्रतः नाम कश्चन सज्जनः आसीत्। सः दैवभक्तिः, अहिंसा, परधर्मसहिष्णुता, सर्वसमता इत्यादीन् गुणान् जनान् बोधयति स्म। देवव्रतः यत्र निवसति तस्मिन् एव ग्रामे हृशीकेशः नाम अन्यः आसीत्। सः नास्तिकः। धर्माचरणम् अन्धविश्वासः इति भावयति। परहिंसया एव लोके जीवितुं शक्यम् इति प्रतिपादयति। असत्यकथनं वञ्चनं च न दोषाय इति बोधयति सः। येन केन प्रकारेण जीवने सुखं प्राप्तुं प्रयत्नः करणीयः इति जनान् प्रेरयति। एवं परस्परं गुणभेदतः व्यवहारभेदतः च देवव्रत-हृशीकेशयोः वैरम् आसीत्।

कदाचित् देवव्रतः व्याधिग्रस्तः सन् शय्याम् आश्रितवान्। मम अन्तिमक्षणः आसन्नः इति जानन् देवव्रतः अन्तिमेच्छारूपेण– "अहं हृशीकेशं द्रष्टुम् इच्छामि" इति उक्तवान्।

एतत् ज्ञात्वा परमाश्चर्यम् अनुभवन् हृशीकेशः देवव्रतस्य गृहम् आगतवान्। तस्य शय्यायाः पार्श्वे स्थित्वा पृष्टवान्– "मां किमर्थं द्रष्टुम् इष्टवान् भवान्? मरणसमये मम दर्शनतः कः लाभः भवतः?" इति।

तदा देवव्रतः क्षीणशक्तिः सन् अपि मन्दहासपूर्वकम् उक्तवान्– "ये एतत् लोकं त्यजन्ति तैः सह अहं स्वर्गे मिलेयम्। तैः सह वार्तालापम् अपि कुर्याम्। किन्तु स्वर्गलोके भवतः दर्शनं, भवता सह सम्भाषणं वा सर्वथा असाध्यं खलु? अतः अन्तिमतया भवन्तं द्रष्टुम् अत्र आहूतवान्" इति।






# ६

(सत्यानन्दमुनिना तपोबलेन सृष्टः असदृशसामर्थ्यशाली अपूर्वः मुनेः आशयानुगुणं सज्जनान्, निर्धनान्, पामरान् च अपायात् रक्षति स्म। राजकुमारी अज्ञातेन व्याधिना ग्रस्ता यथा स्यात् तथा कृत्वा, व्याधिनिवारणव्याजेन तां परिणेतुम् इच्छन्तं दुष्टं मान्त्रिकं, वञ्चकं तच्छिष्यं च उपायेन राजाधीनौ कृतवान् अपूर्वः। तदनन्तरम्.....)

अपूर्वः दुष्टं मान्त्रिकं वञ्चकं तच्छिष्यं च राजाधीनौ कृत्वा समीरस्य समीपं गतवान्। गाढनिद्रायां मग्नस्य तस्य कर्णयोः समीपे स्थित्वा "समीर! समीर!" इति द्विवारम् आहूतवान्।

झटिति जागरणं प्राप्य समीरः अपूर्वं दृष्ट्वा आश्चर्यातिरेकेण मञ्चात् अवतीर्य भक्त्या अपूर्वं नमस्कृतवान्।

"समीर! भवता अल्पं साहाय्यं करणीयं खलु?" इति उक्तवान् अपूर्वः।

"किं तत् साहाय्यम्? भवान् मम देवः, मम प्रभुः। भवदर्थं यत्किमपि कर्तुं सिद्धः अहम्" इति उक्तवान् समीरः।

"पञ्च बालकाः अपायग्रस्ताः सन्ति। ते इदानीं त्वरया रक्षणीयाः" इति उक्तवान् अपूर्वः।

"भवता यथा सूच्यते तथा कर्तुम् अहं सिद्धः एव। मया किं करणीयम् इति आदिशतु" इति



वदन् समीरः अपूर्वेण सह गन्तुं सिद्धः जातः।

"का समस्या इति वक्तव्यं चेत् समयः आवश्यकः। इदानीं तु एकैकः क्षणः अपि अमूल्यः। भवान् मया सह आगच्छतु। भवान् एव सर्वं ज्ञास्यति" इति उक्त्वा समीरस्य हस्तं गृहीत्वा ततः प्रस्थितवान् अपूर्वः। यदा वेगः अधिकः जातः तदा आकाशे उड्डयनस्य अनुभवः प्राप्तः समीरेण। अल्पे एव काले तौ समुद्रतीरं प्राप्तवन्तौ।

नदीसमुद्रसङ्गमे, तीरात् अनतिदूरे काचित् महानौका स्थिता आसीत्।

"समीर! अद्य पञ्च बालकाः विहारार्थम् अत्र समुद्रतीरम् आगताः आसन्। तैः एषा महानौका दृष्टा। नौकायाः अन्तः अपि द्रष्टव्यम् इति बालकानां कुतूहलम्। ते धैर्येण गत्वा नौकानायकं दृष्ट्वा नौकादर्शनेच्छां निवेदितवन्तः। नौकानायकः मधुरैः वचनैः व्यवहरन् नौकास्थानि वस्तूनि, विविधान् प्रकोष्ठान् च प्रदर्शितवान्। सर्वं दृष्ट्वा बालकाः उक्तवन्तः– "विलम्बः जातः। वयं गृहं गच्छामः" इति। तदा नौकानायकः बालकेभ्यः मधुरं पानीयं दत्तवान्। तत् पीत्वा बालकाः गाढनिद्रामग्नाः जाताः। अल्पे एव काले एषा नौका इतः प्रस्थानं करिष्यति। 'दूरस्थं द्वीपं नीत्वा एते बालाः दासरूपेण विक्रेतव्याः' इति नौकानायकस्य इच्छा" इति उक्तवान् अपूर्वः।

"एतत्सर्वं कथं ज्ञातवान् भवान्?" इति कुतूहलेन पृष्टवान् समीरः।

"बालाः लघुनौकया नीयमानाः दृष्टाः मया। एतेषां नौकास्थानां मुखदर्शनतः एव ज्ञातं यत् एते दुर्व्यवहारे मग्नाः इति। अतः अहम् एतान् रहसि अनुसृतवान्। नौकायाम् एतेषां वार्तालापं श्रुतवान्। ततः एतेषां दुर्व्यवहारः स्पष्टं ज्ञातः" इति उक्तवान् अपूर्वः।

"महानौकायाः समीपं कथं गतवान् भवान्?" इति पृष्टवान् समीरः।

"मुनेः अनुग्रहतः अहम् असाध्यम् अपि कार्यं साधयिष्यामि। तदस्तु, एते बालकाः दुष्टानां वञ्चनाजालतः विमुक्ताः यथा स्युः तथा करणीयं खलु भवता?" इति उक्तवान् अपूर्वः।

"भवान् तु आत्मनः रक्षणे निगूहने च समर्थः। किन्तु मम तादृशं सामर्थ्यं नास्ति खलु? यदि अहं महानौकां गच्छेयं तर्हि दुष्टैः बद्धः भवेयम्" इति उक्तवान् समीरः।

"तदर्थं योग्यम् उपायम् अहं सूचयिष्यामि। मया यथा सूच्यते तथा भवान् करोति चेत् न कोऽपि अपायः भवतः। इदानीम् आवाभ्यां समुद्रप्रयाणं करणीयम्। तदर्थं सिद्धः वा भवान्?" इति पृष्टवान् अपूर्वः।

"भवतः सूचनां शिरसा धरामि" इति उक्तवान् समीरः।

अनन्तरम् अपूर्वः समुद्रं पश्यन् षीष्कारं कृतवान्। अनन्तरक्षणे एव महातरङ्गः उद्गतः। तेन तरङ्गेण सह चत्वारः महामीनाः तरन्तः आगत्य तीरं प्राप्तवन्तः। अपूर्वः समीरस्य हस्तं गृहीत्वा अग्रे गतवान्। तौ एकैकं मीनम् आरूढवन्तौ। तौ च मीनौ महानौकाम् उद्दिश्य वेगेन प्रस्थितवन्तौ। अपूर्व-समीरयोः रक्षणार्थम् अन्यौ द्वौ मीनौ तौ अनुसृतवन्तौ।

"भवान् तु आकारेण अत्यल्पः। एतादृशः भवान् एतान् महतः मीनान् कथं स्वाधीनीकृतवान्?" इति पृष्टवान् समीरः।

"मया एते न स्वाधीनीकृताः। दिव्यात्मा समग्रं प्रपञ्चम् अभिव्याप्य तिष्ठति। मानव-पशु-पक्षि-कीटादिष्वपि तस्य दिव्यात्मनः अंशाः भवन्ति एव। स्वस्मिन्



स्थितं दिव्यात्मांशं स्मृत्वा कोऽपि सन्देशः प्रेष्यते चेत् अस्माकं मनसि स्थितः प्राणी अस्मदिच्छायाः अनुगुणं व्यवहरिष्यति। किन्तु एवं करणसमये अस्माकं भावशुद्धिः स्यात्। उदात्तकार्यम् अस्माकं लक्ष्यं स्यात्। तदा एव प्राणिनः अस्मदनुकूलं व्यवहरिष्यन्ति। आत्मसन्देशप्रेषणद्वारा अहम् एतान् मीनान् मदनुकूलान् कृतवान्। एतच्च तत्त्वं मुनेः अनुग्रहतः ज्ञातं मया" इति उक्तवान् अपूर्वः।

"एवं तर्हि भवान् मानवान् अपि स्वानुकूलान् कर्तुं शक्नुयात् खलु?" इति पृष्टवान् समीरः।

"तत् तु कष्टकरं कदाचित्।



मानवेतरजीविनां स्वभावः समानः। किन्तु मानवस्वभावः सर्वथा विभिन्नः। मानवस्य बुद्धिमत्ता भवति। अतः सः प्रकृत्यधीनः न भवति। तस्य व्यवहारे मनसः पात्रत्वम् अधिकम्। मनसि सदापि समुद्रे तरङ्गाः इव विचाराः, प्रश्नाः, सन्देहाः च उद्भवन्ति। तदा तु प्राकृतिकस्वभावस्य गौणत्वम्। ये सत्यवादिनः, निष्कल्मषहृदयाः, स्नेहपराः च भवन्ति ते तु आत्मसन्देशं श्रोतुम् अर्हन्ति" इति उक्तवान् अपूर्वः।

एवं वार्तालापं कुर्वन्तौ तौ महानौकायाः समीपम् आगतवन्तौ। गाढान्धकारमयी रात्रिः सा। समुद्रतरङ्गशब्दं विना नान्यः शब्दः श्रूयते तत्र। मीनौ समीरम् अपूर्वं च उन्नीतवन्तौ। एतौ वातायनद्वारा नौकायाः अन्तः दृष्टिं प्रसारितवन्तौ। सुखनिद्रायां निमग्नाः शयानाः बालाः दृष्टाः ताभ्याम्। पानीयजनितायाः मूर्च्छातः इतोऽपि न विमुक्ताः ते। यत्र बालाः शयिताः सन्ति स च प्रकोष्ठः बहिस्तात् दृढेन तालेन कीलितः आसीत्। अल्पाकारः समीरः वातायनद्वारा अन्तः प्रविश्य वातायनफलकम् अपसारितवान्। तदा तु वातायनरन्ध्रं विशालं जातम्। समीरः अपि अन्तः गतवान्।

एवं महानौकां प्रविष्टौ तौ निश्शब्दं गत्वा नौकायाः अन्यस्मिन् प्रकोष्ठे दृष्टिं प्रसारितवन्तौ। तत्र सहचरेण सह चर्चायां मग्नः नौकानायकः ताभ्यां दृष्टः। तस्मिन् प्रकोष्ठे खड्गाः, दण्डाः, शूलानि, अन्यानि विचित्राणि आभरणानि च बहूनि आसन्। नौकानायकस्य सम्भाषणात् अपूर्वसमीराभ्यां ज्ञातं यत् समुद्रचोराणां नौका एषा इति।

"यावत् एतेषां बालानां मातापितरः एतान् अन्विष्यन्तः अत्र न आगच्छेयुः ततः पूर्वम् एव इतः निर्गन्तव्यम् अस्माभिः" इति उक्तवान् नौकानायकः।

"आगच्छन्तु ते। किं तेन? अनुमतिं विना कोऽपि एतां महानौकाम् आरोढुं न शक्नोति खलु? अतः का हानिः अस्माकम्?" इति पृष्टवान् उपनायकः।

"कोऽपि अस्मद्विषये सन्देहं यथा न प्राप्नुयात् तथा व्यवहरणीयम् अस्माभिः।

यदि कश्चित् अस्मद्विषये सन्देहं प्राप्नुयात् तर्हि भाविजीवनं कष्टकरं भवेत्'' इति उक्तवान् नौकानायकः।

अनन्तरं तौ ततः निर्गतवन्तौ। नायकस्य आज्ञायाः अनुगुणं नौका ततः प्रस्थिता।

''समीर! नौकानायकः अत्र यदाकदापि आगच्छेत्। अतः भवान् बालानां मध्ये शयनं करोतु। अग्रे किं करणीयम् इति समये सूचयिष्यामि'' इति उक्तवान् अपूर्वः।

अपूर्वस्य सूचनां शिरसा वहन् समीरः बालकानां मध्ये निद्रां प्राप्तवान् इव शयनं कृतवान्। अल्पे एव काले तालापनयनशब्दः श्रुतः। नौकानायकः अन्तः आगतवान्। उपनायकः तेन सह आसीत्। अपूर्वः झटिति निलीय स्थितवान्।

''एतान् रत्नद्वीपं खलु नयामः?'' इति पृष्टवान् उपनायकः।

''तत्र गमनं मास्तु इदानीम्। समीपस्थं शुक्तिद्वीपम् एव नयाम। विभिन्नेभ्यः देशेभ्यः आगताः दासवणिजः तत्र मेलिष्यन्ति। तत्रैव एते बालकाः अधिकेन मूल्येन विक्रेतुं शक्याः'' इति उक्तवान् नौकानायकः।

प्रकोष्ठे प्रकाशः मन्दः आसीत्। उपनायकः अग्रे गत्वा वर्तिकायाः मालिन्यम् अपनीय दीपं कान्तियुक्तं कृतवान्।

सुप्तान् बालकान् दूरात् एव पश्यन् नौकानायकः– ''एकैकः अपि शतरूप्यकात्मकं मूल्यम् अर्हेत्। तर्हि एतेषां



विक्रयणेन पञ्चशतं रूप्यकाणि प्राप्यन्ते मया'' इति ससन्तोषम् उक्तवान्।

''कीदृशी गणना भवतः? शतं षड्भिः गुणितं चेत् पञ्चशतं कथं प्राप्यते?'' इति बालकानां समीपे स्थितः उपनायकः उक्तवान्।

''किं रे प्रलपति? पञ्च बालाः मया एव आनीताः। कथं ते षट् भवेयुः'' इति उक्तवान् आसने उपविष्टः नायकः।

''अत्र षट् दृश्यन्ते इति तु सुस्पष्टम्'' इति उक्तवान् उपनायकः।

''मूर्ख! गणितं किञ्चित् पुनर्गणितवान् स्यात् भवान्। पञ्चानां गणनायाम् अपि असमर्थः भवान् किं वा साधयेत् जीवने?''



इति उपहसितवान् नायकः।

''अदृष्ट्वा उपहासः न उचितः। समीपम् आगत्य गणयित्वा स्वयं जानातु – कति सन्ति अत्र इति'' इति कोपेन उक्तवान् उपनायकः।

नायकः आसनात् उत्थाय अग्रे आगत्य बालान् गणितवान्। वस्तुतः अपि षट् दृश्यन्ते! दीपं हस्तेन स्वीकृत्य एकैकस्य अपि मुखं परिशीलयन् द्विवारं गणितवान् नायकः। तस्य मुखे आश्चर्यरेखाः दृश्यन्ते।

''कथम् एतत् सम्पन्नम् इति आश्चर्यं वा? यथाकथमपि जातं स्यात्? किं तेन कारणान्वेषणेन? शतं रूप्यकाणि अधिकतया प्राप्यन्ते इति तु सन्तोषाय एव खलु? विषयं सम्यक् ज्ञात्वा किमपि वक्तव्यम्, उपहासः करणीयः वा। अस्तु नाम, भवता उपहासः कृतः यत् तदर्थं क्षमा प्रार्थनीया इति अहं तु न वदामि'' इति वदन् उच्चैः हसितवान् उपनायकः।

''रे उद्धत! माम् उपहसन् अट्टहासं करोति वा मम पुरतः? कियत् धाष्ट्यं भवतः?'' इति वदन् खड्गम् उन्नीतवान् नायकः।

''मया कः दोषः आचरितः? मयि भवता अर्पितं वचनं प्रत्यर्पितं, तावदेव'' इति वदन् द्वित्राणि पदानि पृष्ठतः स्थापितवान् उपनायकः।

''अविधेय! अविवेकिन्! दर्पोद्धत! नायकः अहं कथम् आदरेण द्रष्टव्यः इति पाठयिष्यामि इदानीम्। मूर्ख! अहङ्कारिन्!'' इति क्रोधेन उच्चैः उक्तवान् नायकः।

नायकस्य एतत् आक्रोशनं श्रुत्वा सहचराः सर्वे तत्र सम्मिलिताः। नायकोपनायकयोः परस्परद्वेषः अस्ति इति ते जानन्ति स्म। 'क्षुल्लकेन कारणेन स च द्वेषः एवं विस्फोटितः भवेत्' इति तैः न निरीक्षितम् आसीत्।

''रे तूष्णीं तिष्ठतु। नायकः अहम् इति गर्वः भवतः। भवान् यद्यत् अपमाननं करोति तत्सर्वं मौनं सोढव्यं खलु अस्माभिः? भवतः स्वेच्छावृत्तिः किमर्थं सोढव्या? मां किं कुर्यात् भवान्? भवतः शौर्यम् अहं न जानामि वा? खड्गः भवतः अलङ्काराय'' इति उत्तरं दत्तवान् उपनायकः।

''रे,मम खड्गस्य तीक्ष्णतां पश्यतु तावत्'' इति-वदन् क्रोधम् उद्वमन् उपनायकस्य उपरि आक्रमणं कृतवान् नायकः।

उपनायकः झटिति उत्प्लुत्य पार्श्वं गतवान्। स्वकीयं खड्गम् आकृष्य नायकस्य उरसि बलात् प्रहृतवान्। नायकः आर्तस्वरेण आक्रन्दनं कुर्वन् अधः पतितवान्।

सर्वे सहचराः आश्चर्येण भीत्या च शिलाप्रतिमाः इव मौनं स्थितवन्तः।

उपनायकः उच्चैः अट्टहासं कुर्वन्– ''येन क्रमेण एतेन पूर्वतनः नायकः मारितः आसीत् तेनैव क्रमेण एषः मारितः मया। किन्तु एषः मया आत्मरक्षणार्थं मारितः। अन्यच्च पञ्चषडित्येतयोः भेदम् एव यः ज्ञातुं न शक्नोति सः अस्माकं नायकः कथं स्यात्? इतःपरम् अहं नायकः। एतस्य दुष्टस्य शवं समुद्रे क्षिप्त्वा स्वकर्मणि उद्युक्ताः भवन्तु भवन्तः'' इति आज्ञां कृतवान्।

तस्य आज्ञां पालयन्तः केचन सहचराः अग्रे आगत्य शवम् उन्नीय समुद्रे क्षिप्तवन्तः। अनन्तरं सर्वे ततः निर्गताः।

एतस्य कोलाहलस्य कारणतः बालाः जागरिताः अभवन्। 'इतः बहिर्गमनं कथम्?' इति चिन्तयन्तः ते वातायनतः बहिः दृष्टिं प्रसारितवन्तः। तदा समीरः दीपं निर्वाप्य मन्दस्वरेण उक्तवान्– ''मित्राणि! निद्राजनकं पानीयं पाययित्वा वञ्चनया भवतः सर्वान् नयन्तः सन्ति एते दुष्टाः। दासरूपेण भवन्तः विक्रेतव्याः इति एतेषां योजना। उपायेन आत्मरक्षणं करणीयम् इदानीम्। भवन्तः मिथ्यानिद्राम् अभिनयन्तः पुनरपि शयनं कुर्वन्तु। क्षुल्लकं कारणं व्याजं प्रकल्प्य उपनायकेन नायकः मारितः। एतत् अजानन्तः इव व्यवहरेम वयम्। अन्यथा ते अस्मान् कारागारे स्थापयेयुः। अतः केनापि प्रमादः न करणीयः'' इति।

'एषः नूतनः कथम् अत्र आगतः?' इति आश्चर्यम् अनुभवन्तः ते तदीयां सूचनां पालयन्तः मौनं शयनं कृतवन्तः।

–(अनुवर्तते)






# राजनीतिनिपुणता

रात्रेः गभीरताम्, उलूकानां भयजनकं घूङ्कारं, शृगालानां घोरं ध्वनिं, श्मशानभूमेः भीकरतां, वेतालवशीकरणस्य दुस्साध्यतां च अविगणयन् त्रिविक्रमः पुनरपि गत्वा वृक्षम् आरूढवान्। शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! प्रयत्ने दृढः भवान् अग्निवर्णः इव फलं हस्ते प्राप्नुयात्। किन्तु अनन्तरकाले तेन राज्ञा अग्निवर्णेन यथा कृतं तथा फलम् अयोग्याधीनं न कुर्यात् इत्यत्र कः विश्वासः? भवान् जागरूकतां यथा प्राप्नुयात् तथा कर्तुम् अग्निवर्णस्य कथां विस्तरेण श्रावयामि। श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं रत्नपुरीम् अग्निवर्णः नाम राजा पालयन् आसीत्। राजा अप्रतिमवीरः।

## वेतालकथा



अन्यराज्याकाङ्क्षा सर्वथा नास्ति तस्य। तदीये राज्ये जनाः सुखेन शान्त्या तृप्त्या च निवसन्ति स्म।

रत्नपुर्याः प्रतिवेशिराज्यम् अस्ति कलशपुरम्। तस्य राज्यस्य राजा सोमशेखरः। रत्नपुर्याः कलशपुरस्य च मध्ये बहोः कालतः वैरम् आसीत्।

'शताधिकवर्षेभ्यः वैरम् अनुवर्तमानम् अस्ति। औदार्यं प्रदर्श्य यदि अहं मैत्रीप्रस्तावं कुर्यां तर्हि देशद्वयस्य प्रजाः सुखेन जीवितुं शक्नुयुः। परस्परमैत्र्या परस्परसाहाय्यं, ततः उभयोः अपि देशयोः अभिवृद्धिः भविष्यति' इति अग्निवर्णराजस्य विचारः।

अतः कदाचित् अग्निवर्णराजः कलशपुरं प्रति राजदूतद्वारा उपायनं सम्प्रेष्य मैत्रीप्रस्तावं कृतवान्।

किन्तु राजा सोमशेखरः एतं प्रस्तावं सर्वथा अनिच्छन् प्रत्युत्तरं प्रेषितवान्– "भवतः पूर्वजैः यत् अहितम् आचरितं तत् कदापि विस्मर्तुं न शक्नुमः वयम्। अतः शत्रुत्वं विस्मर्तुं मैत्रीम् उपस्थापयितुं च वयं न इच्छामः" इति।

एतदनन्तरं द्वित्राणि वर्षाणि अतीतानि। कदाचित् मृगयार्थम् अरण्यं गतः सोमशेखरः अपायग्रस्तः सन् प्राणान् त्यक्तवान्। तदीय पुत्रः सत्यव्रतः कलशपुरस्य राजा जातः अपि। सत्यव्रतः पिता इव अविवेकी न। अग्निवर्णेन कृतं मैत्रीप्रस्तावं स्मरति सः। 'यदि द्वयोः देशयोः मध्ये मैत्री उपस्थापिता स्यात् तर्हि वरं स्यात्' इति चिन्तयति सः।

अग्निवर्णस्य पुत्री स्वयम्प्रभा। प्राप्तवयस्कायाः तस्याः सौन्दर्यं, बुद्धिमत्ता, सुशीलता, कुलोचितः व्यवहारः च प्रसिद्धः आसीत्। 'यदि अहम् एतां परिणयेयं तर्हि द्वयोः देशयोः मध्ये दृढा मैत्री उपस्थापिता भवेत्' इति आलोचितवान् सत्यव्रतः।

स्वकीयम् आशयं पत्रे लिखित्वा तत् पत्रं दूतद्वारा अग्निवर्णाय प्रेषितवान् सत्यव्रतः। सत्यव्रतेन कृतः प्रस्तावः अग्निवर्णाय नितराम् अरोचत। 'सत्यव्रतः शूरः सुन्दरः च तरुणः। शान्तिप्रस्तावं स्वयं कुर्वतः एतस्य चिन्तनम् अपि उच्चम् अस्ति। अतः एषः मम पुत्र्यै योग्यः वरः' इति निश्चितवान् अग्निवर्णः।

अग्निवर्णस्य पुत्रः वीरकेसरी। पितुः निर्णयः तस्मै न अरोचत। 'शत्रुवंशीयाय राजकुमाराय सहोदर्याः दानम् सर्वथा अवमानकरम्' इति चिन्तयति सः। किन्तु स्वकीयम् आशयं पितुः पुरतः प्रकाशयितुम् अशक्नुवन् सः मौनम् आश्रितवान्।

राजपरिवारे केचन वीरकेसरिविषये विशेषाभिमानवन्तः आसन्। ते वीरकेसरिणः आशयं जानन्तः स्वार्थसाधनेच्छया तम् उक्तवन्तः— "राजकुमारीं स्वयम्प्रभां परिणेतुम् इच्छतः सत्यव्रतस्य काऽपि दुरालोचना भवेत् एव। सत्यव्रतस्य दुष्टविचारम् अजानन् राजा अग्निवर्णः एतं विवाहप्रस्तावम् अङ्गीकृतवान् अस्ति। किन्तु एषः विवाहः सम्पन्नः चेत् कदाचित् पित्रार्जितं सिंहासनं भवतः हस्तात् च्युतं भवेत्। अतः एषः विवाहः यथा न प्रचलेत् तथा कोऽपि उपायः चिन्तनीयः" इति।

एतत् वचनं वीरकेसरिणः प्रियं जातम्। अतः सः पितरं सिंहासनच्युतं कृत्वा सिंहासनं वशीकर्तुं रहसि उपायं रचितवान्। तदनुगुणं सः कदाचित् मध्यरात्रसमये हठात् आक्रमणं कृत्वा पितरं बद्धवा कारागारे स्थापितवान्। शुभे मुहूर्ते सिंहासनारूढः जातः च।

कारागारे स्थितः अग्निवर्णः पुत्रस्य व्यवहारविषये खेदम् अनुभवति। 'सिंहासनम् आरोढव्यम् इति विचारः मम पुत्रस्य मनसि स्वयम् उत्पन्नं न स्यात्। कैश्चित्



स्वार्थसाधकैः राजोद्योगिभिः एषः विचारः तस्य मनसि आरोपितः स्यात्। युक्तायुक्तताम् अविचार्य एतेन एवं कृतं स्यात्' इति चिन्तयति सः।

सिंहासनाम् आरूढवान् वीरकेसरी सत्यव्रतं प्रति वार्तां प्रेषितवान्— "मम भगिनीं परिणीय सिंहासनं वशीकरणीयम् इति भवतः उद्देशः। प्रतीकारसाधनार्थं भवता एषः वञ्चनामार्गः आश्रितः। दुष्टं भवन्तम् अवश्यं दण्डयिष्यामि। युद्धार्थं सन्नद्धः भवतु भवान्" इति।

वीरकेसरिणः अन्यथाचिन्तनं ज्ञात्वा महान्तं खेदम् अनुभूतवान् सत्यव्रतः। 'मम सदाशयं संशयदृष्ट्या पश्यति एषः। एतं पराजित्य सज्जनः अग्निवर्णः पुनरपि

सिंहासने उपवेशनीयः। एतत् एव कालोचितं कर्तव्यम्' इति निश्चितवान् सः।

अत्रान्तरे रत्नपुरीराज्ये केचन राजविरोधम् आरब्धवन्तः। 'महाराजं कारागारे संस्थाप्य युवराजः यत् स्वयं सिंहासनम् आरूढवान् तत् अनुचितम्' इति प्रकटरूपेण उक्तवन्तः ते।

विरोधं ये आचरन्ति तेषां नायकः रविचन्द्रः। 'रविचन्द्रः कारागारे स्थापितः चेत् विरोधवातावरणं स्वयम् उपशान्तं भविष्यति' इति आलोच्य वीरकेसरी रविचन्द्रस्य बन्धनार्थं प्रयत्नम् आरब्धवान्।

'युद्धार्थम् एषः एव सुसमयः' इति आलोच्य सत्यव्रतः ससैन्यं प्रस्थाय रत्नपुर्याः उपरि आक्रमणं कृतवान्।

इदानीम् उभयसङ्कटे पतितः वीरकेसरी। एकत्र अन्तःशत्रुः निग्रहणीयः, अपरत्र बाह्यशत्रुः सम्मुखीकरणीयः। अत्रान्तरे अन्या अपि घटना प्रवृत्ता। सिंहासनं वशीकरणीयम् इति पूर्वं ये बोधितवन्तः आसन् ते एव – 'शत्रुस्नेहं सम्पाद्य वीरकेसरी सिंहासनच्युतः कृतः चेत् अस्मासु एव कश्चित् राजपदम् अलङ्कर्तुम् अर्हति। तदा वयं सर्वे उच्चाधिकारं प्राप्स्यामः' इति आलोच्य देशद्रोहं चिन्तयन्तः आसन्। एषः विषयः वीरकेसरिणा कथमपि ज्ञातः। 'मया एतेषु विश्वस्य यत् साहसकार्यं कृतं तत् अनुचितं जातम्' इति चिन्तयन् सः देशद्रोहिणः अन्विष्य कारागारे स्थापितवान्।

'इतः परं विजयः वीरस्वर्गः वा मम स्यात्'



इति आलोच्य धैर्येण शत्रुसेनां सम्मुखीकृतवान् वीरकेसरी। घोरं युद्धं प्रवृत्तम्। वीरकेसरी पराजयं प्राप्तवान्, सत्यव्रतेन बद्धः अभवत् अपि।

सत्यव्रतः वीरकेसरिणं कारागारे स्थापितवान्। महाराजम् अग्निवर्णं बन्धविमुक्तं कृतवान् चापि।

अग्निवर्णः सत्यव्रतस्य साहाय्यं कृतज्ञतापूर्वकं स्मरन् तं प्रीत्या आलिङ्ग्य उक्तवान्– "सत्यव्रत! कथं प्रत्युपकारः करणीयः इत्येव न ज्ञायते मया। भवता अपूर्वं साहाय्यं कृतम्" इति।

"महाराज! मया महत् साहाय्यं किमपि न कृतम्। तथापि प्रत्युपकाररूपेण किमपि करणीयम् एव इति चिन्तनं भवतः अस्ति चेत् पूर्वनिश्चयानुसारं मां जामातरं करोतु। तेन सर्वं मङ्गलमयं भविष्यति" इति उक्तवान् सत्यव्रतः।

अग्निवर्णः ततः स्वभवनं गत्वा पुत्रीं स्वयम्प्रभाम् आनायितवान्। "भवतीं सत्यव्रतः परिणेतुम् इच्छति। एतद्विषये भवत्याः आशयः कः?" इति पृष्टवान्।

स्वयम्प्रभा किञ्चित्कालं मौनं स्थितवती। अनन्तरम् आत्मनि धैर्यं धृत्वा– "तात! मम मनसि स्थितं सुस्पष्टं वदामि। भवान् यदा कारागारे आसीत् तदा भवतः विमोचनार्थं प्रजाः जागरय्य सङ्घटनं कृतवन्तं रविचन्द्रं परिणेतुम् इच्छामि अहम्। किन्तु मम एताम् इच्छां यदि अहं निवेदयेयं तर्हि सत्यव्रतः कुपितः भवेत् इति भीतिः मम। अतः इदानीं





किं करणीयम् इति अजानती विह्वला अस्मि" इति उक्तवती।

अग्निवर्णः क्षणकालस्य चिन्तनस्य अनन्तरं– "वत्से! भीतिः मास्तु भवत्याः। भवती यम् इच्छति तेन रविचन्द्रेण सहैव भवत्याः विवाहः भविष्यति। निश्चिन्ता भवतु भवती" इति उक्त्वा ततः निर्गतवान्। सत्यव्रतं वस्तुस्थितिं निवेदितवान् च।

एतत् श्रुत्वा सत्यव्रतः किञ्चिदपि न कुपितः। स्वयम्प्रभायाः आतङ्कनिवृत्तिः सन्तोषः च यथा स्यात् तथा कृतवान् सः। अग्रजः इव अग्रणीः सन् सः स्वयम्प्रभायाः विवाहं निर्वर्तितवान्। एतदनन्तरं सः स्वराज्यं प्रति प्रस्थितवान्। अग्निबर्णः सत्यव्रतं राजगौरवेण सत्कृत्य प्रेषितवान्।

एतदनन्तरं राजा अग्निवर्णः राज्यं पुत्रस्य वीरकेसरिणः अधीनं कृत्वा वानप्रस्थाश्रमम् अवलम्ब्य अरण्ये वसतिं कृतवान्।

वेतालः एवं कथां समाप्य अवदत्– "राजन्! सत्यव्रतः यत् राज्यं जितवान् तत् स्वाधीनं न कृतवान्। एतावदेव न, यस्यां तस्य अनुरागः आसीत् तां स्वयम्प्रभां न परिणीतवान् अपि। किमर्थं तेन एवं कृतम्? सत्यव्रतः राजनीतिज्ञः न वा? यदि तेन रत्नपुरी स्वाधीनीकृता स्यात्, शत्रुदेशीया राजकुमारी परिणीता च स्यात् तर्हि तत् न राजधर्मविरुद्धम्। तथापि सत्यव्रतः तथा न कृतवान्। अन्यच्च अग्निवर्णः सामान्यकुलोत्पन्नाय रविचन्द्राय पुत्रीं दातुं सिद्धः जातः। एतत् किमर्थम्? रविचन्द्रे का विशेषयोग्यता दृष्टा? एतावदेव न, यः पिता गौरवेण द्रष्टव्यः तम् एव कारागारे स्थापितवान् वीरकेसरी। एतादृशाय पुत्राय किमर्थम् अग्निवर्णः राज्यम् अर्पितवान्? एतेन प्रजानां स्थितिः शोचनीया न भवेत् वा? आहत्य वक्तव्यं चेत् सत्यव्रतः अग्निवर्णः वा राजनीतिनिपुणौ न इत्येव खलु सिध्यति? मम एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "भवतः कथनं सर्वथा अनुचितम्। यतः सत्यव्रतः अग्निवर्णश्चापि

राजनीतिनिपुणौ इत्यत्र सन्देहः एव नास्ति। रत्नपुरी-कलशपुरयोः मध्ये मैत्री उपस्थापनीया इति सत्यव्रतस्य प्रधानं लक्ष्यम्। तदङ्गतया तेन राजकुमारी परिणेतव्या इति चिन्तितम् आसीत्। वीरकेसरिणः निग्रहणात् अग्निवर्णस्य विमोचनात् च तदीयं प्रधानं लक्ष्यं सिद्धम्। अन्यस्मिन् अनुरक्ता स्वयम्प्रभा बलात् परिणीता चेत् अटविकत्वं प्रदर्शितं स्यात्। एतादृशेन विवाहेन गौरवस्य हानिः। सुखसन्तोषादयः अपि न प्राप्यन्ते। एतत् सम्यक् विचिन्त्य सत्यव्रतः स्वयं स्वयम्प्रभायाः विवाहं निर्वर्तितवान्। एवं कुर्वता तेन महत् औदार्यं प्रदर्शितम्। एतत् श्रेष्ठायाः राजनीतेः लक्षणम्। इतः परम् अग्निवर्णस्य व्यवहारं चिन्तयाम तावत्। रविचन्द्रः योग्यः वरः इति तेन यत् निर्णीतं तत् युक्तम् एव। सामान्यः रविचन्द्रः देशहितार्थं जनान् सङ्घटितवान्, तदापि आत्मशक्त्या एव। एतादृशः सामान्यकुले जातः चेदपि योग्यः एव। एतस्मिन् स्वयम्प्रभायाः अनुरागः निक्षिप्तः आसीत्। अतः एतस्मै पुत्रीं दातुं सिद्धः जातः अग्निवर्णः।

वीरकेसरी स्वभावतः सज्जनः एव। किन्तु स्वार्थसाधकानाम् उपदेशात् सः पितरं कारागारे स्थापितवान्। किन्तु यदा अपायसमये स्वार्थसाधकैः वञ्चनामार्गः चिन्तितः तदा एषः विवेकं प्राप्तवान्। प्रजानां विरोधतः अल्पकालिक-कारागारवासतः च सः युक्तायुक्तताविवेकं प्राप्तवान्। एवं स्वानुभवबलात् परिष्कृतः पुत्रः राज्यभारनिर्वहणार्थं योग्यः एव इति निश्चित्य पुत्राय राज्यम् अर्पितवान् अग्निवर्णः। वानप्रस्थाश्रमम् आश्रित्य वृद्धराजेन यत् करणीयं तत् अपि कृतवान्। एवम् अग्निवर्णः अपि राजनीतिनिपुणः एव'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# विस्मरणशीलता

सीतारामस्य विस्मरणशीलता अधिका। किञ्चित्कालतः पूर्वं यत् कृतं तदपि विस्मरति सः। नित्योपयोगीनि वस्तूनि कुत्रचित् स्थापयति। अनन्तरक्षणे तत् अस्मरन् सर्वत्र अन्विष्यन् न प्राप्तम् इति खेदम् अनुभवति। सीतारामस्य विस्मरणशीलतायाः कारणतः गृहसदस्याः अन्ये चापि बहुधा क्लेशम् अनुभवन्ति। पत्युः विस्मरणशीलतां जानती तस्य पत्नी सदा तस्य साहाय्यं करोति।

सीतारामः प्रतिदिनं मन्दिरं गत्वा पुराणप्रवचनं शृणोति। किन्तु प्रत्यागमनसमये कदाचित् पादरक्षां विस्मृत्य आगच्छति, पुनः कदाचित् छत्रं विस्मरति, अन्यदा कदाचित् उत्तरीयम् एव विस्मरति। अनन्तरं गृहसदस्येषु कश्चित् गत्वा तेन विस्मृत्य त्यक्तं वस्तु आनयति। प्रतिदिनम् एतादृशी घटना प्रचलति एव।

पत्युः विस्मरणशीलतां दृष्ट्वा उद्विग्ना खिन्ना च तत्पत्नी कदाचित् तं कठोरैः वचनैः निन्दितवती। पत्न्याः निन्दावचनानि श्रुत्वा खिन्नः सीतारामः। विस्मरणशीलतायाः परिहारः कथम् इति न जानाति सः। तथापि दृढेन मनसा सः निश्चितवान् यत् अद्य आरभ्य किमपि न विस्मरणीयम् एव इति। अनन्तरदिने मन्दिरतः प्रत्यागतः सीतारामः पत्नीम् आहूय महता सन्तोषेण– "पश्यतु अत्र। भवन्तः सर्वे मां विस्मरणशीलं वदन्ति खलु। अद्य मन्दिरतः आगमनसमये अविस्मृत्य पादरक्षां धृत्वा आगतवान् अस्मि" इति।

पत्युः पादयोः पादरक्षे दृष्ट्वा आश्चर्यम् अनुभवन्ती तत्पत्नी उक्तवती– "हा हन्त! 'विस्मियते मया' इति वदन् अद्य मन्दिरं प्रति गमनसमये भवान् पादरक्षां न नीतवान् आसीत्। इदानीं तु अन्यस्य कस्यचित् पादरक्षां धृत्वा आगतः अस्ति भवान्" इति।



# महात्मभिः दृष्टं भारतम्—

## "देशः नाम भूभागमात्रं न"

१८७२ तमे वर्षे अगस्ट्मासे पञ्चदशे दिनाङ्के जन्म प्राप्तवान् श्रीमान् अरविन्दमहोदयः इंग्लेण्ड्देशे उन्नतविद्याभ्यासं समाप्य १८९३ तमे वर्षे भारतं प्रत्यागतवान्। देशस्य पुनरुज्जीवनं प्रतिपादितवान् सः। 'सम्पूर्णं स्वातन्त्र्यम् आवश्यकम्' इति तेनैव सर्वप्रथमं प्रतिपादितम्। 'भारतं निश्चयेन स्वतन्त्रं भविष्यति' इति निश्चित्य सः १९१० तमे वर्षे पाण्डिच्चेरीं गतवान्। मानवकुलस्य उद्धारं कर्तुं समर्थां दिव्यां शक्तिं भूलोकम् आनेतुम् इच्छन् सः योगाभ्यासनिरतः जातः। भारतं १९४७ तमे वर्षे तस्मिन् दिने स्वतन्त्रं जातं, यच्च अरविन्दस्य जन्मदिनम् आसीत्।

अरविन्दमहोदयस्य वाणी एषा— "भारतमाता नाम प्रपञ्चस्य कश्चन भूभागः केवलं न। भारतमाता शक्तिस्वरूपिणी। दिव्यशक्तिः सा। अजरा अमरा च एषा। भाविनि काले मानवकुलस्य औज्ज्वल्यम् उन्नतिं च सम्पादयिष्यति एषा। तादृशी शक्तिः अस्ति एतस्याम्। प्रपञ्चोद्धारार्थं भारतात् एव कश्चन धर्मः उदितः भविष्यति, यश्च अनन्तः अमरश्च सन् धर्म-विज्ञान-दर्शनानि एकसूत्रसम्बद्धानि करिष्यति, उदात्तम् आत्मतत्त्वं दर्शयिष्यति च" इति।

अरविन्दवर्येण प्रतिपादितः भावी कालः सदा स्मर्तव्यः अस्माभिः। तस्य कालस्य कल्पनार्थं योग्यानि पदानि स्थापनीयानि च।

## भवन्तः जानन्ति वा?

१. उत्तरभारतस्य कः खातप्रदेशः 'देवखातः' इति उच्यते?

२. इदानीं यत्र देहलीनगरम् अस्ति तत्र पाण्डवकालीनम् इन्द्रप्रस्थम् आसीत् इति श्रूयते। तस्य प्रदेशस्य नाम अद्यावधि सप्तवारं परिवृत्तम्। तानि सप्त नामानि कानि?

३. कस्यचित् महात्मनः अस्थीनि रजतपेटिकायां संस्थाप्य ३०० वर्षेभ्यः रक्ष्यमाणानि सन्ति। द्वादशसु वर्षेषु एकवारं तेषां दर्शनार्थम् अनुमतिः दीयते। स च महात्मा कः? तानि अस्थीनि कुत्र सन्ति?

४. भारते 'अरुणवर्णनगरम्' इति प्रसिद्धं नगरं किम्? तस्य नाम किमर्थं तथा प्रसिद्धम्?

(उत्तराणि ३६तमे पृष्ठे)

## अस्माकं देवताः

# श्रीकृष्णः

महाविष्णोः अवतारेषु कृष्णावतारः पूर्णावतारः इति उच्यते। वसुदेवदेवक्योः पुत्रः श्रीकृष्णः जन्मसमनन्तरम् एव लीलां प्रदर्शयितुम् आरब्धवान्। बाल्ये तेन गोपालैः सह क्रीडितम्। वञ्चनया आगता पूतना लीलया मारिता तेन। विषमयस्य कालिङ्गसर्पस्य मर्दनं कृतम्। गोवर्धनगिरिः उन्नीतः। लोककण्टकं कंसः, अन्ये बहवः दुष्टाः राक्षसाः च मारिताः। एवं कृष्णः गोपानाम् इतरेषां च आनन्दाश्चर्यपात्रं प्रीतिपात्रं च आसीत्। द्वारकाधीशः सन् सः उत्तमरीत्या प्रजापालनं कृतवान्। धर्मपक्षपातिनां पाण्डवानां पक्षम् आश्रित्य तान् विजयमार्गेण नीतवान्। महाभारतयुद्धारम्भे विषादग्रस्तम् अर्जुनं भगवद्गीतां बोधयन् कर्तव्यं स्मारयित्वा तं कार्योन्मुखं कृतवान्। त्रिकालाबाधितं सत्यं प्रतिपादयन्ती गीता अद्यापि जनानां मार्गदर्शिका अस्ति।

बालकृष्णस्य लीलाविनोदाः, जगन्नाटकसूत्रधारिणः आर्तत्राणपरायणता, इत्यादयः गुणाः बहुभिः कविभिः गीतेषु बहुधा वर्णिताः सन्ति।

श्रीकृष्णजयन्त्युत्सवः समग्रे देशे महता उत्साहेन वैभवेन च आचर्यते भक्तैः।



# र स वा र्ता:



## पिकासोवर्येण दत्तम् उपायनम्

कश्चन चित्रकलाभिमानी पुरुषः 'एकं चित्रं लिखित्वा प्रेषयतु' इति पत्रं विलिख्य तेन सह १०० डालर् (२५०० रूप्यकाणि) चेक्रूपेण प्रसिद्धाय चित्रकाराय पिकासोवर्याय प्रेषितवान्। पिकासो तस्य चेक्पत्रस्य पृष्ठतः हसतः पिशाचस्य चित्रं विलिख्य स्वकीयं हस्ताक्षरम् अपि विलिख्य तत् चेक्पत्रं तस्मै कलाभिमानिने प्रतिप्रेषितवान्। तच्च विशिष्टं चेक्पत्रं गते जून्मासस्य २४तमे दिनाङ्के लण्डन्नगरे सघोषविक्रयणे ३,९६० पौण्ड् (रू. १०,०००-००) मूल्येन विक्रीतम् अभवत्।







## आधिक्येन स्त्रीशिशूनां जननम्

चीनादेशे प्यूजिकन्प्रदेशस्य ईशान्यभागे 'गौयाङ्ग्'नामकः ग्रामः अस्ति। गतेषु चत्वारिंशद्वर्षेशु त[illegible]न ग्रामे माकिं १४० शिशवः जाताः स्युः। [illegible]न्तु तेषु पुंशिशवः १२ एव, अन्ये सर्वे स्त्रीशिशवः। १९७३ तमे वर्षे तस्मिन् ग्रामे केवलं स्त्रीशिशवः एव उत्पन्नाः। तस्य ग्रामस्य परिसरस्य स्त्रीशिशुजननस्य च कोऽपि सम्बन्धः स्यात् वा इति द्रष्टुम् इदानीम् अन्वेषणरताः सन्ति वि[illegible]नः।

# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. प्रख्यातस्य ग्रन्थकर्तुः मुल्कराज् आनन्दवर्यस्य काचित् कृतिः इंग्लेण्ड्देशीयैः प्रकाशकैः विंशतिवारं निराकृता आसीत्। यदा कश्चित् आंग्लेयः तस्याः प्रस्तावनां लिखितवान् तदा सा एव प्रकाशनार्थम् अङ्गीकृता। सः प्रस्तावनालेखकः कः? ग्रन्थस्य च नाम किम्?

२. 'सत्यमेव जयते' इत्येतत् राष्ट्रियचिह्नान्तर्गतं वाक्यं कस्मात् उद्धृतम्?

३. नाट्यशास्त्रसम्बन्धी अतिप्राचीनः भारतीयः ग्रन्थः कः?

४. 'ताकिक्-ए-हिन्द्' इत्येतस्य रचयिता कः?

५. हिन्दीसाहित्यक्षेत्रे आधुनिकरूपकाणाम् आद्येन भारतेन्दुहरिश्चन्द्रवर्येण रचिते प्रसिद्धे कृती के?

# उत्तराणि

## सामान्यज्ञानम्

१. कुलूघनी। अत्र प्रतिग्रामं देवतामूर्तयः भवन्ति। नवरात्रोत्सवसन्दर्भे ताः मूर्तीः अलङ्कृत्य महतीं रथयात्रां निर्वर्तयन्ति अत्रत्याः।

२. लाल् कोट्, सिरी, तुगलकाबाद्, जहाँपनाह्, फिरोजाबाद्, पुराना किला, शाहजहानाबाद् चेति।

३. सेण्ट् फ्रांसिस् जेवियर् इति। गोवानगरे केपड्रल् आफ् बाम् जेसिस् इत्यत्र।

४. राजस्थानराज्यस्य राजधानी जयपुरनगरम्। राजा जयसिंहः एतत् नगरम् अरुणवर्णीयाभिः शिलाभिः निर्मितैः भवनैः राजतोरणैः च अलङ्कृतवान् आसीत् इत्यतः।

## साहित्यज्ञानम्

१. इ.एम्. फार्स्टर् इति।
'अन्टचबल्स्' इति।

२. मुण्डकोपनिषत्तः।

३. भरतमुनिविरचितं 'नाट्यशास्त्रम्'।

४. अलबेरूनी।

५. 'सत्यहरिश्चन्द्र' 'भारतदुर्दशा' चेति।





# प्रथमः कृषिकः

प्राचीने काले टार्टारसुनामकं पाताललोकं प्लूटोनामकः राजा पालयति स्म। कदाचित् प्लूटोराजः प्रोस्परपायिनानामिकां सुन्दरीं दृष्टवान्, तस्याम् अनुरक्तः अभवत् च। सः तां देवकन्यां बलात् उन्नीय त्रिशूलेन सियेननदीं द्विधा विभज्य पातालराज्यं नीतवान्।

यदा प्रोस्परपायिनायाः माता सिरीसा गृहं प्रत्यागतवती तदा तया गृहे पुत्री न दृष्टा। सा पुत्रीम् अन्विष्यन्ती सर्वत्र अटितवती। पर्वतप्रदेशे, खाते, अन्यत्रापि सा बहुधा अन्वेषणं कृतवती। किन्तु तेन किमपि प्रयोजनं न सिद्धम्।





देवमाता सिरीसा वृद्धस्त्रियः वेषेण अटन्ती कदाचित् श्रान्ता सती शिलायाः उपरि उपविष्टवती। नव दिनानि यावत् सा चिन्ताक्रान्ता सती तत्रैव उपविष्टवती आसीत्। सेल्यूसः नाम कश्चन निर्धनः पुरुषः तत्पुत्री च एतां दृष्टवन्तौ। तौ प्रीत्या सिरीसां निवेदितवन्तौ– "अस्माकं कुटीरम् आगच्छतु कृपया" इति।



देवमाता सिरीसा तयोः प्रीत्या वशीकृता अभवत्, ताभ्यां सह कुटीरं गतवती चापि। गमनसमये सः निर्धनः सेल्यूसः सिरिसां निवेदितवान् यत् मम पुत्रः बहोः कालतः घोरेण व्याधिना पीड्यमानः अस्ति, सः इतोऽपि अधिकदिनानि न जीवेत् इति।

सिरीसा सर्वम् आसक्त्या शृण्वती तदीयं कुटीरं गतवती। रोगग्रस्तस्य बालकस्य पार्श्वे उपविश्य तदीयं शिरः स्पृष्टवती। अनन्तरक्षणे एव तस्य बालकस्य मुखे उत्साहचिह्नानि दृष्टानि। सः मन्दहासं प्रकटयन् उपविष्टवान्। एताम् आश्चर्यकरीं घटनां दृष्ट्वा तस्य मातापितरौ भगिनी चापि सन्तुष्टाः।





रात्रौ यदा सर्वे निद्रामग्नाः आसन् तदा सिरीसा तं शयानं बालकम् उत्थाप्य उपवेशितवती। तस्य पुरतः स्वयम् उपविश्य मन्त्रोच्चारणं कर्तुम् आरब्धवती। तावता अकस्मात् जागरणं प्राप्तवती बालकस्य माता मौनं सर्वं पश्यन्ती स्थितवती।

देवमाता सिरीसा तं बालकं भस्मराशेः उपरि शायितवती। एतत् दृष्ट्वा अपि मौनं स्थातुं न शक्तवती बालकस्य माता। 'एषा वृद्धा मम पुत्रस्य अहितं किमपि चिन्तयेत्' इति आलोच्य उत्थितवती सा पुत्रं भस्मराशितः बलात् आकृष्टवती।





तदा सिरीसादेवी तां भीतां वृद्धाम् उक्तवती– "यदि भवत्या इतोऽपि किञ्चित्कालं यावत् संयमः प्रदर्शितः स्यात् तर्हि भवत्याः पुत्रः अमरः अभविष्यत्। सः मृत्युञ्जयः अभविष्यत्। भवती तु मया दत्तं मन्त्रसंस्कारं विच्छिन्नं कृतवती। अस्तु तावत्। भवत्याः पुत्रः अमरत्वं न प्राप्नुयात् चेदपि तारुण्ये साहसी कीर्तिमान् च सन् लोकोपकारं करिष्यति" इति।

एतावत् उक्त्वा देवी सिरीसा ततः निर्गतवती। ततः केषुचित् दिनेषु तया ज्ञातं यत् प्रोस्परपायिना प्लूटोराजेन परिणीता अस्ति। सा च इदानीं टार्टारसलोकस्य राज्ञी अस्ति इति। एतां वार्तां श्रुत्वा सिरीसा सन्तुष्टा जाता। 'अन्येन अपहृता अपि मम पुत्री उत्तमाम् एव स्थितिं प्राप्तवती' इति आलोच्य सा निश्चिन्ता जाता।





एवम् एव कानिचन वर्षाणि अतीतानि। सिरीसादेवी तं निर्धनपरिवारं न विस्मृतवती। तस्य बालकस्य नाम ट्रिप्टोलिमस् इति। स च इदानीं युवकः जातः अस्ति। सिरीसा तस्य निर्धनस्य गृहं गतवती। तं बालकं हलस्य उपयोगं बोधितवती। बीजावापं, समग्रकृषितन्त्रं चापि तं बोधितवती। एवं तं युवकं प्रपञ्चस्य प्रथमं कृषिकं कृतवती सा।

सिरीसादेवी पक्षयुक्ताभ्यां ड्रेगान्प्राणिभ्याम् उह्यमाने रथे तम् उपवेश्य बहुत्र नीतवती। सः तत्र सर्वत्र कृषितन्त्रं जनान् बोधयति स्म। ट्रिप्टोलिमसः स्वकर्तव्यं सम्यक् निर्वहति स्म।





ट्रिप्टोलिमसः स्वग्रामे देव्याः सिरीसायाः निमित्तं भव्यं मन्दिरं निर्मितवान्। तस्मिन् मन्दिरे पूजा उत्सवः इत्यादयः महता वैभवेन प्रचलन्ति स्म। ग्रीक्जनाः बहूनि वर्षाणि यावत् पूजाम् उत्सवं च महता उत्साहेन कुर्वन्तः आसन्।



# वञ्चकः योगीश्वरः

चन्दनपुरनामके देशे भद्राचलः नाम पर्वतः आसीत्। तस्य समीपे घोरम् अरण्यम् आसीत्। अरण्ये कश्चन मार्गः। मार्गस्य पार्श्वे कश्चन आश्रमः। तत्र कश्चित् योगी निवसति स्म। सः सदा तपोनिरतः भवति। अन्ये संन्यासिनः इव न कृशकायः। दृढकायस्य तस्य दीर्घं श्मश्रु कृष्णवर्णेन विराजते।

सः योगीश्वरः तत् अरण्यं कदा आगतः, कुतः आगतः इति कोऽपि न जानाति। अतः योगीश्वरस्य विषये एकैकः एकैकां कथां वदति। सः कश्चन महानुभावः इति तु सर्वे विश्वसन्ति।

'योगीश्वरः लोकोद्धारार्थम् आगतः अस्ति। यः योगीश्वरं शरणं गच्छति तस्य कष्टानि सर्वाणि अपगच्छन्ति' इति जनानां विश्वासः। अतः योगीश्वरं द्रष्टुम् आगच्छतां भक्तानां सङ्ख्या दिने दिने वर्धते।

सः योगीश्वरः सदा मौनम् एव तिष्ठति। आश्रमस्य पुरतः शिलायाः उपरि उपविश्य नेत्रे निमील्य सदा ध्यानं करोति सः। तेन अरण्यमार्गेण ये गच्छन्ति तेषु बहवः श्रद्धया तं नमस्कृत्य फलानि धनं वा तस्य पुरतः समर्प्य गच्छन्ति। किन्तु योगीश्वरः तु कदापि केनापि सह एकं वचनम् अपि न वदति।

तस्मिन् अरण्ये लुण्ठाकाः अधिकाः। संन्यासिनः आगमनात् पूर्वं तु जनाः समूहरूपेण अपि तेन मार्गेण गन्तुं भीतिम् अनुभवन्ति स्म। यदा संन्यासी आगतः तदा जनेषु धैर्यम् आगतम्। अतः तत्र जनसञ्चारः अधिकः जातः। एतस्य परिणामतः अरण्यमार्गे लुण्ठनं न्यूनं भवेत् खलु? किन्तु तथा किमपि न जातम्। लुण्ठनं तु दिने दिने वर्धते एव।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



कदाचित् रात्रौ एकादशवादनसमये एकं शकटम् अरण्यमार्गेण गच्छत् आसीत्। शकटे तिस्रः स्त्रियः, द्वौ पुरुषौ, एकः बालः च आसन्। स्त्रीणां शरीरे बहूनि आभरणानि आसन्।

तदा अकस्मात् लुण्ठाकनायकः शकटस्य पुरतः प्रत्यक्षः अभवत्। तदीये तीक्ष्णे नेत्रे, प्रबलं श्मश्रु, स्थूलं शरीरं, वेषभूषादिकं, हस्तस्थितं दण्डं च दृष्ट्वा शकटस्थाः सर्वे नितरां भीताः। कस्यापि मुखतः किमपि वचनं न निर्गतम्।

लुण्ठाकनायकः दण्डेन सशब्दं भूमिं प्रहरन्– "मम वचनं जागरूकतया शृण्वन्तु। लुण्ठनं मम वृत्तिः। अहं भवतां सुवर्णाभरणानि धनं च इच्छामि, न तु भवतां प्राणान्। अतः विना विरोधम् आभरणानि धनं च अर्पितानि चेत् सर्वे भवन्तः सजीवम् इतः गन्तुम् अर्हन्ति। यदि कोऽपि विरोधं प्रदर्शयितुम् उद्युक्तः भवेत्, आक्रोशनं कर्तुं वञ्चयितुं वा उद्युक्तः भवेत्, तर्हि सः यमलोकं गच्छेत्। तत्र गुल्मानां मध्ये पश्यन्तु। मम सहचराः दश जनाः तत्र सन्नद्धाः सन्ति। मम सङ्केतमात्रेण ते अत्र आगत्य यत् करणीयं तत् कृत्वा गच्छन्ति। अतः प्राणाः प्रियाः चेत् मम वचनं विना विरोधं पालयन्तु" इति उक्तवान्।

शकटस्थाः लुण्ठाकनायकेन सूचितायां दिशि दृष्टिं प्रसारितवन्तः। तत्र भयजनकानि दश शिरांसि दृष्टानि। तेषां शिरसां दर्शनतः शकटस्थानां धैर्यं च्युतं जातम्। पुरुषौ शिरः अवनमय्य मौनं स्थितवन्तौ। स्त्रियः अश्रूणि स्रावयन्त्यः आभरणानि एकैकशः शरीरतः अपनीय लुण्ठाकनायकाय अर्पितवत्यः। तानि स्वीकृत्य लुण्ठाकनायकः– "हुं, गच्छन्तु इतः" इति आज्ञास्वरेण उक्तवान्। शकटं मन्दगत्या अग्रे अगच्छत्।

किञ्चित्कालानन्तरं तेनैव मार्गेण कश्चन वणिक् पादाभ्याम् आगतवान्। तम् अवरुध्य लुण्ठाकनायकः कठिनस्वरेण गर्जितवान्- "रे, विना विरोधं धनम् अर्पयतु। अन्यथा प्राणैः वियुक्तः भवितुं सिद्धः भवतु। गुल्मस्य पृष्ठतः मम दश अनुयायिनः सन्ति। भवता अल्पः विरोधः प्रदर्शितः चेदपि ते अत्र आगत्य



भवन्तं मारयिष्यन्ति। अतः प्राणत्यागः वरं वा, धनसमर्पणं वरं वा इति भवान् एव निर्णयतु" इति उक्त्वा तान् प्रदर्शितवान्।

वणिक् धैर्यवान् उपायचतुरः च। एतस्य सामर्थ्यं कियत् इति परीक्षितुम् इच्छन् सः समययापनार्थम् उक्तवान्– "भोः, मम समीपे किञ्चित् एव धनम् अस्ति। तदपि मदीयं न" इति।

तदा लुण्ठाकनायकः कोपेन– "धनं यस्य कस्यापि भवतु नाम। यावत् अस्ति तावत् अर्पयतु" इति आज्ञापितवान्।

वणिक् स्वसमीपे स्थितम् अल्पं धनं लुण्ठाकनायकाय अर्पयन्– "भोः अनुयायिचोराः! भवतां नायकस्य हस्ते मया दशसहस्रं रूप्यकाणि अर्पितानि। स्वभागं ततः अवश्यं स्वीकुर्वन्तु" इति उच्चस्वरेण उक्तवान्।

एवम् उच्चस्वरेण वदन्तं वणिजं ताडयितुं दण्डम् उन्नीतवान् लुण्ठाकनायकः। किन्तु तावता पार्श्वे उत्प्लवनं कृत्वा वणिक् ततः वेगेन पलायितवान्।

ततः गत्वा सः समीपस्थे ग्रामे स्थितां धर्मशालां प्राप्तवान्। तत्र सौभाग्यवशात् दलपतिः राजभटाः च आसन्। वणिक् तान् उत्थाप्य प्रवृत्तं समग्रं निवेदितवान्। उत्साही दलपतिः– "कुत्र सन्ति ते चोराः? मां नयतु तत्र। अद्यैव तान् ग्रहीष्यामि तावत्" इति उक्तवान्।

यत्र चोराः सन्ति तत् स्थलं प्राप्तं तैः। वणिक् इदानीम् अन्येन वेषेण आगतः अस्ति। राजभटाः निलीय स्थितवन्तः। वणिक् एकाकी अग्रे गतवान्। लुण्ठाकनायकः तस्य समीपम् आगत्य "धनम् अर्पयतु" इति वदन् "अन्यथा मम सहचराः भवतः शिरः भञ्जयिष्यन्ति" इति उक्त्वा गुल्मं प्रदर्शितवान्।

किन्तु तावता दृढकायः धैर्यशाली दलपतिः विना शब्दं पृष्ठतः आगत्य लुण्ठाकनायकं कण्ठे प्रहृत्य बाहुभ्यां दृढं गृहीतवान्। सूचनारवम् अपि कृतवान्। तदा राजभटाः धावन्तः तत्र आगतवन्तः।

"भवन्तः झटिति गत्वा गुल्मान्तरितान्

एतस्य अनुयायिनः गृह्णन्तु। एतं निग्रहीतुं बन्धुं च अहम् अलम्'' इति भटान् आज्ञापितवान् दलपतिः।

राजभटाः वीरगर्जनं कुर्वन्तः गुल्मसमीपं गतवन्तः। यानि शिरांसि दृष्टानि तेषाम् उपरि प्रहारं दत्तवन्तः। आश्चर्यं नाम ततः किमपि आक्रन्दनं न श्रूयते। कोऽपि पलायनं कर्तुं प्रयत्नं न करोति अपि! राजभटाः परीक्षितवन्तः। तदा तैः दश चञ्चाः दृष्टाः, न तु मानवाः। चञ्चानां शिरांसि उष्णीषैः अलङ्कृतानि आसन्। उपरिष्टात् शिरांसि केवलं दृश्यन्ते स्म, न तु शरीराणि।

चोरनायकस्य बुद्धिमत्तां दृष्ट्वा सर्वे आश्चर्यचकिताः जाताः। अवशिष्टां रात्रिं यापयितुं ते समीपस्थं योगीश्वराश्रमं गतवन्तः। किन्तु तत्र योगीश्वरः एव न दृश्यते!

दलपतेः आज्ञायाः अनुगुणं राजभटाः आश्रमे सर्वं परिशीलितवन्तः। तत्र तैः कृत्रिमं श्मश्रु, कृत्रिमा जटा, काषायवस्त्राणि च प्राप्तानि। आभरणानां राशिः धनपात्रं चापि प्राप्तम्। 'एषः लुण्ठाकः एव दिने योगीश्वरवेषेण प्रायः तिष्ठति स्म' इति आलोच्य दलपतिः कोपेन लुण्ठाकं पृष्टवान्– ''किम् एतत्सर्वम्?'' इति।

''किं गोपनेन? एषः मम दिनवेषः। भवद्भिः बद्धस्य मम एषः रात्रिवेषः एव नैजवेषः। मां कारागारे स्थापयितुम् इच्छन्ति वा भवन्तः? स्थापयन्तु। केषाञ्चित् वर्षाणाम् अनन्तरं मम विमोचनं भविष्यति एव। तदा अन्यं वेषं धरिष्यामि अहम्। एतत् एवं मम जीवनम्'' इति वदन् उच्चैः अट्टहासं कृतवान्।

''विमोचनं प्राप्तं चेदेव खलु वेषान्तरं धृत्वा जनान् वञ्चयेत् भवान्? महावञ्चकस्य भवतः जीवनं कारागारे एव यापितं भविष्यति'' इति उक्तवान् दलपतिः।

लुण्ठाकनायकः राज्ञः समीपं नीतः। राजा सर्वं विचार्य वञ्चकं तम् आजीवकारागारवासदण्डेन दण्डितवान्।






अशोकवनात् आगताभिः स्त्रीभिः यत् उक्तं तत् श्रुतवतः रावणस्य कोपः प्रसिद्धः। 'एताः राक्षस्यः बलशालिन्यः एव। एतासु एव भीतिं जनितवान् सः कपिः कीदृशः स्यात्? अपूर्वः एषः कपिः मया द्रष्टव्यः' इति आलोचितवान् सः।

अतः सः बलयुक्तान् शूरान् राक्षसान् आहूय आज्ञापितवान् यत् अशोकवनस्य नाशस्य हेतुः सः कपिः अत्र सजीवम् आनेतव्यः इति।

राक्षसाः आयुधानि स्वीकृत्य हनूमतः ग्रहणार्थम् अशोकवनं प्रति प्रस्थितवन्तः। द्वारतोरणस्य उपरि उपविष्टवन्तं हनूमन्तं ते दूरात् एव दृष्टवन्तः। महाकपिः एव एषः इति वदन्तः ते तस्य ग्रहणार्थम् अग्रे धावितवन्तः। भीमकायः हनूमान् पुच्छेन तान् सर्वान् प्रहृत्य अधः पातितवान्। भुजेन तान् मर्दयन् अट्टहासं कृतवान्। तस्य भीतिजनकः ध्वनिः तत्र सर्वत्र प्रसृतः। किं प्रवृत्तम् इति अजानन्तः सर्वे राक्षसाः भीतिं प्राप्तवन्तः।

हनूमान् उग्रया दृष्ट्या राक्षसान् पश्यन् गर्जनेन राक्षसेषु भीतिम् उत्पादयन्– "श्रीरामः जयतु! लक्ष्मणार्यः जयतु! रामसखः सुग्रीवः जयतु!" इति जयघोषं कृत्वा उक्तवान्– "कोसलेन्द्रस्य महाराजस्य दशरथसुतस्य श्रीरामस्य पादसेवकः वायुपुत्रः हनूमान् अस्मि अहम्। वृक्ष-शिला-तोरणादीनि एव मम आयुधानि। रावणस्य दर्पस्य भञ्जनार्थम् अत्र आगतवान् अस्मि। राक्षसेषु पश्यत्सु, लङ्काम् उध्वस्तां कृत्वा

## १५. राक्षसैः सह युद्धम्



यथापूर्वं समीपस्थं द्वारतोरणम् आरुह्य उपविष्टवान्।

सजीवं पलायितवन्तः द्वित्राः राक्षसाः रावणसमीपं गत्वा प्रवृत्तं सर्वं निवेद्य मौनं शिरः अवनमय्य स्थितवन्तः।

रावणस्य कोपः प्रवृद्धः। सः प्रहस्तपुत्रं महावीरं जम्बुमालिं सैनिकैः सह युद्धार्थं प्रेषितवान्।

अत्रान्तरे हनूमतः दृष्टिः समीपस्थस्य चैत्यप्रासादस्य उपरि पतिता। सः झटिति उत्प्लुत्य तस्य चैत्यप्रासादस्य समीपं गत्वा मुष्टिप्रहारेण पातयित्वा पादाभ्यां मर्दनं कुर्वन् सिंहनादं कृतवान्। प्रासादरक्षकाः राक्षसाः विविधैः आयुधैः तं प्रहृतवन्तः। हनूमान् एकं स्तम्भम् उन्नीय परितः भ्रामयित्वा तान् राक्षसान् प्रहृतवान्। ते सर्वे राक्षसाः प्राणान् त्यक्तवन्तः।

एतावता प्रहस्तपुत्रः जम्बुमालिः धनुर्बाणादीन् गृहीत्वा गर्दभैः उह्यमाने रथे उपविश्य वीरगर्जनं कुर्वन् हनूमन्तम् उद्दिश्य बाणप्रयोगं कुर्वन् अग्रे आगतवान्।

प्रहस्तपुत्रस्य दर्शनतः हनूमतः उत्साहः द्विगुणितः जातः। स्तम्भम् इतस्ततः चालयन् प्रहस्तपुत्रेण प्रयुज्यमानान् बाणान् लीलया निवारयन् पुनरपि द्वारतोरणस्य उपरि उपविष्टवान् हनूमान्। आगच्छतः शत्रोः बाणप्रहारम् अपि उपेक्ष्य द्वारतोरणस्य उपरि उपविष्टवतः हनूमतः व्यवहारेण

सीतादेवीं नमस्कृत्य रावणस्य पुरतः स्थास्यामि। रावणस्य यदि धैर्यं स्यात् तर्हि सः स्वयं मम पुरतः आगमिष्यत्। युद्धं परित्यज्य गत्वा तं भीरुम् अत्र आगन्तुं सूचयन्तु। अथवा मरणार्थं सिद्धाः भवन्तु" इति।

हनूमतः वचनं श्रुत्वा राक्षसाः नितरां भीताः। तथापि राजाज्ञाम् उल्लङ्घयितुम् अशक्नुवन्तः ते धैर्यं मेलयित्वा उक्तवन्तः— "अये उन्मत्तवानर! अलं प्रलपनेन। यमसदनस्य मार्गं प्रदर्शयिष्यामः वयम्" इति।

अनन्तरं ते हनूमन्तम् उद्दिश्य विविधानि आयुधानि क्षिप्तवन्तः। हनूमान् शरीरम् एकवारं बलेन विधूय रोमाणि इव आयुधानि अपसार्य पार्श्वे स्थितम् अयोमयं परिघम् उन्नीय राक्षसान् मारितवान्। अनन्तरं

प्रहस्तपुत्रस्य कोपः प्रवृद्धः। सः शरवर्षणम् एव कृतवान्। हनूमान् स्तम्भं पार्श्वे क्षिप्त्वा एकां महतीं शिलाम् उन्नीय जम्बुमालिम् उद्दिश्य क्षिप्तवान्।

जम्बुमालिः गदासदृशेन बाणेन तां शिलाम् अधः पातितवान्। तथैव हनूमता वेगेन क्षिप्तं सालवृक्षम् अपि अधः पातितवान् सः। तदीयाः बहवः बाणाः हनूमन्तं बहुधा अपीडयन्। एतेन हनूमान् उग्ररूपं प्राप्य परिघम् उन्नीय वेगेन परिभ्राम्य जम्बुमालेः उपरि क्षिप्तवान्। हनूमतः प्रहारात् जम्बुमालिः प्राणान् अत्यजत्। तदीयः रथः अपि भग्नः। रथवाहकाः गर्दभाः अपि मृताः।

जम्बुमालेः मरणं श्रुतवतः रावणस्य नेत्राभ्यां क्रोधस्फुलिङ्गाः निर्गताः। सः अग्निसमान् सप्त मन्त्रिकुमारान् युद्धार्थं प्रेषितवान्।

सप्त मन्त्रिकुमाराः अपि शौर्येण असमानाः एव। ते रथान् आरुह्य महता उत्साहेन हनूमतः समीपं गतवन्तः। अशोकवनद्वारस्य समीपम् आगत्य हनूमतः उपरि बाणवर्षणं कृतवन्तः।

शत्रुप्रमुखाणां सङ्ख्याबाहुल्यं जानन् हनूमान् झटिति आकाशं प्रति उत्प्लुत्य शत्रुप्रहारात् आत्मानं रक्षन् युद्धम् आरब्धवान्। विद्युद्वेगेन सञ्चरन् सः घोरगर्जनं कृतवान्। अनन्तरम् एकं पादप्रहारेण मारयित्वा अपरं मुष्टिप्रहारेण यमसदनं प्रेषितवान्। अन्यं शिलापातेन मारयित्वा अपरं वृक्षेण शिरसि ताडितवान्।





एवं सप्त मन्त्रिकुमाराः अपि अल्पेन एव कालेन मारिताः तेन। एतस्मिन् युद्धे असङ्ख्याः राक्षसवीराः अपि मृताः।

युद्धं समाप्य तृप्त्या निःश्वसन् हनूमान् 'इतः परं कः युद्धार्थम् आगच्छेत्?' इति प्रतीक्षमाणः द्वारतोरणस्य उपरि उपविष्टवान्।

वीराधिवीराः मन्त्रिकुमाराः अपि मृताः इति वार्तां श्रुतवतः रावणस्य हृदये अपि भीतिः उत्पन्ना। तथापि सः क्षणाभ्यन्तरे एव धैर्यं प्राप्य सेनानायकान् विरूपाक्ष-यूपाक्ष-दुर्धर-प्रघस-भावकर्णान् दृष्टवान्।

रावणस्य इङ्गितं जानन्तः ते झटिति उत्थितवन्तः। ''भवन्तः एतत्क्षणे एव गजसेनया रथसेनया च सह गत्वा तं कपिं निगृह्णन्तु। सः मायावी स्यात् अपि। अतः तस्य व्यवहारेण वञ्चिताः मा भवन्तु। एषः सामान्यः कपिः न इति एतावता एव सिद्धम्। एषः कपिः एव न स्यात् वा इति सन्देहः मम। इन्द्रेण प्रेषितः कश्चित् कपिरूपेण आगतः स्यात्। यतः कपि- प्रमुखाणां वालि-सुग्रीव-नील-द्विविद-जाम्बवत्प्रभृतीनां वानरवीराणां सामर्थ्यम् अहं जानामि। तेषां सामर्थ्यस्य अपेक्षया एतस्य सामर्थ्यम् अत्यधिकं दृश्यते। अतः समग्रां शक्तिं विनियुज्य युद्धं कुर्वन्तु। आत्मरक्षणविषये अपि विशेषावधानं भवतु'' इति आदिष्टवान् रावणः।

राजाज्ञां शिरसा वहन्तः सेनानायकाः विविधानि आयुधानि स्वीकृत्य रथम् आरुह्य अश्वसेनया गजसेनया च सह हनूमत्समीपम् आगतवन्तः। परितः आक्रम्य सर्वाभ्यः दिग्भ्यः हनूमन्तम् उद्दिश्य बाणान् प्रयुक्तवन्तः। एतत् दृष्ट्वा हनूमान् झटिति आकाशम् आश्रित्य आत्मनः रक्षणं कुर्वन् महाकारं प्राप्य दुर्धरस्य उपरि पतितवान्। दुर्धरस्य रथः भग्नः। रथे उपविष्टः दुर्धरः तत्रैव प्राणान् अत्यजत्। तस्य अश्वाः अपि मृताः।

अनन्तरं हनूमान् महान्तम् एकं वृक्षम् उत्पाट्य तेन विरूपाक्षं यूपाक्षं च बलात् प्रहृतवान्। आर्तनादं कुर्वन्तौ तौ प्राणान् त्यक्तवन्तौ।

एतत् दृष्ट्वा कुपितौ प्रघस-भावकर्णौ घोरं युद्धं कर्तुम् उद्युक्तौ। तदा हनूमान् एकं पर्वतम्

उत्पाट्य आनीय तयोः उपरि पातितवान्। पर्वतस्य अधः स्थितौ तौ गतप्राणौ जातौ। महती राक्षससेना अपि नष्टा।

पञ्च सेनानायकाः अपि मृताः इति वार्ता श्रुत्वा दिग्भ्रान्तः रावणः स्वपुत्रम् अक्षकुमारं विशेषदृष्ट्या दृष्टवान्। युद्धप्रियः अक्षकुमारः पितुः दृष्टिसङ्केतम् एव आज्ञां मन्यमानः झटिति उत्थितवान्। सुवर्णरथम् आरुह्य हनूमत्समीपं गतवान्।

तदीयः रथः आयुधेन पूर्णः अस्ति। रथवाहकाः अष्ट अश्वाः तु भूमिम् अस्पृशन्तः इव गच्छन्ति।

अक्षकुमारः दूरात् एव हनूमन्तं दृष्ट्वा सन्तुष्टः— योग्यः प्रबलः प्रतिस्पर्धी सम्मुखे अस्ति इति। अक्षकुमारस्य दर्शनतः हनूमतः उत्साहः अपि द्विगुणितः जातः। तयोः घोरं युद्धम् आरब्धम्। अक्षकुमारः यथा यथा बाणप्रयोगं करोति तथा तथा हनूमतः उत्साहः अपि वर्धते। अक्षकुमारस्य बाणप्रयोगतः आत्मानं रक्षन् हनूमान् आकाशं प्रति उत्प्लुतवान्। अक्षकुमारः अपि रथेन आकाशे स्थितवान्, निरन्तरं बाणवर्षणम् आरब्धवान् च।

'अहो, मम शत्रुः युद्धे समर्थः अस्ति। बाल्ये एव बहूनि तन्त्राणि जानाति। असामान्यः एषः इदानीम् एव यदि न मार्येत तर्हि एषः लोककण्टकं भवेत्। अतः एतस्य मारणार्थं योग्यः उपायः चिन्तनीयः' इति




आलोचितवान् हनूमान्। युद्धं तु यथापूर्वम् अनुवर्तते एव।

हनूमान् चातुर्येण अक्षकुमारस्य समीपं गत्वा तं रथात् भूमिं प्रति आकृष्टवान्। अनन्तरं बाहू प्रसार्य तदीयं पादौ दृढं गृहीत्वा आकाशे वेगेन भ्रामयन् भूमौ घट्टितवान्। एतेन अक्षकुमारः गतप्राणः जातः।

प्रियपुत्रस्य अक्षकुमारस्य घोरं मरणं श्रुत्वा रावणः क्षणकालं स्तब्धः। 'दुःखप्रदर्शनार्थं चिन्तनार्थं वा एषः न समयः' इति आलोच्य सः इन्द्रजितं पश्यन् उक्तवान्— ''पुत्र, वीराग्रेसर! श्रुतं खलु तस्य वानरस्य प्राबल्यम्? जम्बुमालिः, मन्त्रिपुत्राः, पञ्च सेनानायकाः, भवतः अनुजः अक्षकुमारः, अपारा सेना चापि नाशिता तेन। अतः एषः



इन्द्रजित् येषाम् अस्त्राणां प्रयोगं करोति तानि अस्त्राणि हनूमन्तं किञ्चिदपि न पीडयन्ति। अतः इन्द्रजित् सम्यक् ज्ञातवान् यत् एतस्य मारणं सर्वथा असाध्यम् इति। 'एषः वानरजातौ जातः चेदपि शौर्येण मानवान् राक्षसान् च अतिशेते। इन्द्रादीन् एव जितवान् इति मम ख्यातिः अस्ति। किन्तु किम् एतया कीर्त्या? एतं मारयितुं किम्, मूर्च्छितं कर्तुम् अपि क्लेशः एव। मम पौरुषस्य परीक्षाकालः एषः' इति आलोचितवान् सः। द्विगुणितेन क्रोधेन निरन्तरं बाणवर्षणम् आरब्धवान् च।

'युद्धमर्मज्ञस्य एतस्य हनूमतः मारणं न सुकरम्' इति ज्ञातवान् सः। 'सामान्येन अस्त्रेण एतस्य निग्रहाणम् असाध्यम्' इति आलोच्य सः ब्रह्मास्त्रं प्रयुक्तवान्। तेन च अस्त्रेण हनूमान् बद्धः अभवत्। एवम् अस्त्रेण बद्धः हनूमान् भूमौ अपतत्।

हनूमतः पतनं दृष्ट्वा राक्षसाः महान्तं सन्तोषम् अनुभूतवन्तः। 'ब्रह्मास्त्रेण बद्धः एषः हस्तौ पादौ वा चालयितुं न शक्नोति। अतः अस्मान् ताडयितुं मारयितुं वा न अर्हति' इति आलोच्य ते धैर्येण अग्रे गत्वा दृढाभिः रज्जुभिः हनूमन्तं बद्धवन्तः।

'किमपि अस्त्रं भवन्तं बन्द्धुं न अर्हति' इति ब्रह्मणा वरः दत्तः आसीत्। स च वरः स्मृतः हनूमता। तावता ब्रह्मास्त्रबन्धनम् अपि शिथिलं जातम्।

वानरः न सामान्यः इति तु सुस्पष्टम्। अतः एतस्य सामर्थ्यातिशयं मनसि स्थापयित्वा युद्धं करणीयं भवता। युद्धे भवान् देवेन्द्रम् अपि जितवान्। भवत्समानः सामर्थ्यशाली अन्यः नास्ति लोके। सैन्ये विश्वासम् अकृत्वा, बाहुबले विश्वस्य युद्धं करोतु। तं दुष्टं बद्ध्वा आनयतु च'' इति।

इन्द्रजित् पितरं प्रदक्षिणीकृत्य नमस्कृत्य तदीयम् अनुज्ञां प्राप्य रथम् आरुह्य युद्धार्थं प्रस्थितवान्।

इन्द्रजित् यदा निरन्तरबाणप्रयोगम् आरब्धवान् तदा हनूमान् आकाशम् आश्रित्य आत्मानं रक्षितवान्। आत्मना प्रयुक्तानि सर्वाणि अस्त्राणि व्यर्थानि जातानि इति ज्ञातवतः इन्द्रजितः क्रोधः नितरां प्रवृद्धः।

ब्रह्मास्त्रेण विमुक्तः हनूमान् क्षणमात्रेण रज्जुबन्धनं छेत्तुम् अर्हति। तथापि सः तादृशं कार्यं न कृतवान्। 'बद्धं माम् एते रावणसमीपं नेष्यन्ति एव। रावणः मया प्रत्यक्षं द्रष्टव्यः। तेन सह वार्तालापः अपि करणीयः। तदर्थम् एषः सुसमयः' इति आलोच्य सः रज्जुच्छेदनप्रयत्नं न कृतवान्।

हनूमान् ब्रह्मास्त्रात् मुक्तः अस्ति इति न जानन्ति राक्षसाः। ते हनूमन्तं दण्डेन ताडयन्तः तर्जयन्तः नोदयन्तः च उत्साहेन कोलाहलं कुर्वन्तः रावणसमीपं नीतवन्तः।

इन्द्रजित् हनूमन्तम् रावणसभायाम् उपस्थाप्य "पश्यन्तु, एषः एव सः वानरः" इति सभ्यान् रावणं च साभिमानम् उक्तवान्।

मदगजः इव स्थितं, किञ्चिदपि धैर्यच्युतिम् अननुभवन्तं हनूमन्तं दृष्ट्वा सभ्याः परस्परम् उक्तवन्तः– "एषः बलशाली वानरः कस्य पक्षस्य स्यात्? किं निमित्तम् अत्र आगतवान् स्यात्? लङ्कायाम् एतस्य किं कार्यं स्यात्? अशोकवनस्य ध्वंसने किं कारणं स्यात्? एतादृशं सामर्थ्यातिशयम् एषः कथं प्राप्तवान्?" इति।

हनूमान् धैर्येण स्थित्वा रावणं सभ्यान् च उग्रदृष्ट्या दृष्टवान्। 'एषः रावणः दुष्टः चेदपि एतस्य राजगाम्भीर्यं तु अपूर्वम् एव' इति आलोचितवान् सः।

तावता रावणस्य आज्ञायाः अनुगुणं मन्त्रिषु अन्यतमः हनूमन्तं पृष्टवान्– "अये वानर! भवान् किमर्थम् अत्र आगतवान्? कः भवन्तं प्रेषितवान्?" इति।

"अहं वानरराजस्य सुग्रीवस्य दूतः अस्मि। राजा सुग्रीवः एव मां प्रेषितवान्" इति गम्भीरस्वरेण उक्तवान् हनूमान्।

तदा रावणः मन्त्रिणं प्रहस्तम् उक्तवान्– "एषः अत्र किमर्थम् आगतः? एतेन अशोकवनस्य ध्वंसः किमर्थं कृतः? राक्षस्यः किमर्थं भायिताः? सैनिकैः सह युद्धं किमर्थं कृतम्? – इत्यादीन् प्रश्नान् पृष्ट्वा विषयं जानातु" इति।






# देवतासर्पः

हरपुरनामके ग्रामे पार्वती नाम काचित् धनिकस्त्री आसीत्। तस्याः चत्वारः पुत्राः। पत्युः मरणस्य अनन्तरं तान् सर्वान् एषा एव धैर्येण पोषितवती आसीत्। प्राप्तवयस्काः ते नगरे वस्त्रापणान् आरब्धवन्तः। योग्याः वधूः अन्विष्य तेषां चतुर्णाम् अपि विवाहं निर्वर्तितवती आसीत् पार्वती।

पार्वत्याः मनः कोमलं शुद्धं च। किन्तु सा व्ययविषये औदार्यं न प्रदर्शयति। 'बुभुक्षानिवारणार्थं भोजनम्। अतः पाकार्थं विशेषव्ययः न करणीयः' इति तस्याः सिद्धान्तः। तस्याः पुत्राणां तु एतादृशजीवनस्य अभ्यासः अस्तीत्यतः ते एतद्विषये किमपि न वदन्ति। किन्तु तेषां पत्न्यः तु एतां कृपणतां न सहन्ते। विविधानि खाद्यानि खादितुम् इच्छन्त्यः अपि ताः श्वश्र्वाः पुरतः इच्छां प्रकटयितुम् असमर्थाः सत्यः मौनं तिष्ठन्ति।

'श्वश्रूः यदि कदाचित् कुत्रचित् गच्छेत् तर्हि वयम् अपेक्षानुगुणं पाकं खाद्यानि च सज्जीकृत्य तृप्त्या भोजनं कर्तुं शक्नुयाम' इति तासां स्नुषाणाम् इच्छा।

कदाचित् पार्वती अनुजगृहं प्रति गमनार्थं सन्नाहम् आरब्धवती। एतत् ज्ञातवतीनां स्नुषाणां मुखानि विकसितानि अभवन्। ताः नेत्रसङ्केतेन रहसि मन्दवार्तालापेन च भावविनिमयं कृतवत्यः। पार्वती स्नुषाणां व्यवहारं जानती अपि अजानती इव स्थितवती।

रात्रौ सर्वेषां शयनस्य अनन्तरं स्नुषाः अङ्गणे मिलितवत्यः। श्वश्र्वाः अनुपस्थितौ किं किं खाद्यं सज्जीकरणीयम् इति समालोचनं कृतवत्यः। ज्येष्ठा स्नुषा उक्तवती– 'मया घृतेन सज्जीकृतः अतिरसः खादनीयः' इति। द्वितीया स्नुषा उक्तवती– ''भल्लातकयुक्तानि लड्डुकानि मह्यं नितरां



रोचन्ते'' इति। तृतीया स्नुषा उक्तवती– ''पोलिकासदृशम् अन्यत् खाद्यं लोके नास्ति। अतः पोलिकाः अवश्यं करणीयाः'' इति। ''द्राक्षादिमिश्रितस्य सरान्नस्य रुचिः तु अवर्णनीया। अतः केसरान्नम् अपि कुर्मः'' इति चतुर्थी स्नुषा उक्तवती। सर्वविधानि खाद्यानि अपि करणीयानि इति ताभिः निश्चितम्। कानि कानि वस्तूनि आनेतव्यानि इत्यपि निश्चित्य ताः शयनं कृतवत्यः। पार्वती रहसि स्थित्वा स्नुषाणां समालोचनम् आद्यन्तं श्रुतवती आसीत्। श्वश्रूः श्रुतवती अस्ति इति स्नुषाः न जानन्ति।

प्रातः पार्वती वृषभशकटम् आरुह्य गृहात् प्रस्थितवती। श्वश्र्वाः प्रस्थानम् एव प्रतीक्षमाणाः स्नुषाः अपेक्षितानि वस्तूनि आनायितवत्यः। काचित् चणकदालं जले स्थापितवती। अन्याः विविधैः शाकैः पाकं कृतवत्यः। भोजनसमये वैविध्यमयं पाकं दृष्ट्वा तासां पतयः आश्चर्यं प्रकटयन्तः– ''अद्य किमर्थं बहुविधान् पदार्थान् सज्जीकृतवत्यः? भवतीनां श्वश्रूः यदि एतत् ज्ञातवती स्यात् तर्हि क्रुद्धा स्यात् खलु?'' इति उक्तवन्तः।

''जीवने एकस्मिन् दिने वा वैविध्यमयं भोजनं प्राप्तम् इति तु सन्तोषस्य विषयः खलु? एतादृशे सन्दर्भे अप्रियं विषयं स्मृत्वा किमर्थं वा खेदम् अनुभवन्ति? प्रथमं सन्तोषेण भोजनं कुर्वन्तु'' इति उक्तवत्यः तेषां पत्न्यः।

'किमपि मातरं मा वदन्तु कृपया' इति पतीन् उक्त्वा विषयस्य प्रसारः यथा न स्यात् तथा अपि कृतवत्यः ताः। तासां पतयः एतत् अङ्गीकृत्य नगरं गतवन्तः।

पतीनां गमनस्य अनन्तरम् एतासां पाककार्यं पुनरपि आरब्धम्। एकया पेषणं कृतम्। अपरया भल्लातकानां खण्डः सज्जीकृतः। अन्यया घृतादिकं सज्जीकृतम्। एवं सर्वासु खाद्यसज्जीकरणव्यग्रासु, बहिः द्वारताडनशब्दः श्रुतः।

ज्येष्ठा स्नुषा झटिति गत्वा द्वारम् उद्घाटितवती। अहो आश्चर्यम्! तत्र श्वश्रूः स्थिता दृश्यते।

तया कश्चन कण्डोलः धृतः आसीत्।

"अहो, महान् धर्मः! प्रयाणम् अर्धे एव स्थगयित्वा प्रत्यागता अहम्" इति वदन्ती सा गृहस्य अन्तः आगतवती।

श्वश्र्वाः वचनं श्रुत्वा पाकशालायां स्थिताः तिस्रः अपि स्नुषाः झटिति घृत-शर्करा-भल्लातकादिकं कुत्रापि गोपयित्वा चुल्लीम् अपि निर्वाप्य बहिः आगतवत्यः।

"किम् एतत्? घृतस्य गन्धः कुतश्चित् आगच्छति इव..." इति उक्तवती श्वश्रूः।

तदा झटिति ज्येष्ठस्नुषा उक्तवती– "तत् एवम्। घृतविक्रेता आगत्य अत्र किञ्चित्कालम् उपविष्टः आसीत्। घृतं मास्तु इति उक्तवत्यः वयम्। सः इदमिदानीं गतः। अतः एव अत्र घृतगन्धः" इति। "आम्, आम्" इति उक्तवत्यः अन्याः।

"घृतशब्दश्रवणात् मार्गे प्रवृत्ता घटना स्मृता मया" इति वदन्ती श्वश्रूः पार्श्वस्थे आसन्दे उपविष्टवती।

"मार्गे किं प्रवृत्तम्?" इति कुतूहलेन पृष्टवत्यः स्नुषाः।

"मया इतः प्रस्थितं खलु? मार्गे काचित् लघुनदी मिलिता। नदीक्रमणसमये प्रमादः जातः। 'अहो, वृषभस्य किमपि जातम्' इति वदन् शकटचालकः शकटात् अवतीर्णः। वृषभस्य पादे कण्टकं लग्नं दृष्टं तेन। सः माम् अवतार्य वृषभं शकटात् विमोच्य पार्श्वे नीत्वा कण्टकापनयने उद्युक्तः। अहम् इतस्ततः दृष्ट्वा पार्श्वस्थे शिथिलमण्डपे उपविष्टवती। तत्र मया अतिरसस्य गन्धः आघ्रातः" इति उक्तवती श्वश्रूः।






चतस्रः अपि स्नुषाः आश्चर्यं भीतिं च प्रकटयन्त्यः– "भीतिजनकः सः आकारः कः आसीत्?" इति पृष्टवत्यः।

"स च कश्चन घोरः सर्पः। पुटीकृत्य स्थापिताः पोलिकाः इव दृश्यते स्म सः सर्पः। तस्य फणा तु अतिरसः इव विशालः" इति उक्तवती श्वश्रूः।

"अग्रे किं प्रवृत्तम्?" इति पृष्टवत्यः स्नुषाः। "तावता तत्र कश्चन संन्यासी आगतः। तस्य हस्ते एकं पुटकम् आसीत्। सः भीतां माम् उक्तवान्– 'एषः कश्चन देवसर्पः। एतस्य जिह्वा केसरान्नगन्धयुक्ता। फणा च अतिरसगन्धयुक्ता। एतस्य शरीरं पुटीकृतपोलिकासदृशम्। एतस्य अण्डं च भल्लातकलड्डुकसदृशम्। अतः एतस्य शरीरात् विविधाः गन्धाः निस्सरन्ति' इति। अनन्तरं सः पुटकम् उद्घाट्य पोलिकाः तस्य पुरतः स्थापितवान्। सः सर्पः पोलिकायाः कञ्चन भागं खादित्वा मन्दं ततः निर्गतः" इति उक्तवती श्वश्रूः।

स्नुषाः श्वश्र्वाः मुखं भीत्या पश्यन्ति। कस्याश्चित् अपि मुखात् किमपि वचनं न निर्गतम्।

"भीताः वा भवत्यः? भीतिः मास्तु। सः संन्यासी अपि माम् एवम् एव उक्त्वा सान्त्वनं कृतवान्। सर्पेण आस्वाद्य परित्यक्तं प्रसादरूपेण सः संन्यासी खादति इति श्रूयते। अद्य सः अल्पम् एव स्वीकृत्य मह्यम् अपि

अतिरसः मम प्रियः इति या उक्तवती सा क्षणकालं दिग्भ्रान्ता। तदा मन्दहासपूर्वकं श्वश्रूः कथनम् अनुवर्तितवती– "अनन्तरं किम् अभवत् इत्युक्ते.... घृतगन्धम् आघ्राय अहम् आश्चर्येण मण्डपस्य अन्तः गतवती। गमनसमये मम पादे गोलाकारकं किमपि लग्नम्। अवनम्य दृष्टवती अहम्। तच्च भल्लातकलड्डुकम् आसीत्" इति।

भल्लातकलड्डुकप्रिया स्तब्धा जाता।

"यदा अहं लड्डुकं पश्यन्ती आसं तदा केसरान्नगन्धः अपि आघ्रातः मया। अतिरसाकारकः चाकचक्ययुक्तः कश्चन आकारः दृष्टः तत्र। तम् आकारं दृष्ट्वा अहं नितरां भीता...." इति उक्तवती श्वश्रूः।

किञ्चित् दत्तवान्। सर्पस्य अण्डम् अपि मह्यं दत्तवान् सः'' इति वदन्ती श्वश्रूः पुटकं तासां पुरतः स्थापितवती।

स्नुषाः भीत्या आश्चर्येण च पश्यन्त्यः स्थितवत्यः। तदा पार्वती– ''भीतिः किमर्थम्? खादन्तु तावत्'' इति वदन्ती पोलिकां लड्डुकं च विभज्य स्नुषाणां मुखे स्थापयित्वा स्वयम् अपि किञ्चित् खादितवती। अनन्तरं– ''कण्डोले किम् अस्ति इति न ज्ञातं खलु भवतीभिः? पश्यन्तु तावत्'' इति हसन्ती उक्तवती सा।

ज्येष्ठा स्नुषा अग्रे गत्वा कण्डोलस्य आवरणम् अपनीतवती। गतरात्रौ ताभिः यद्यत् करणीयम् इति चिन्तितम् आसीत् तत् सर्वम् आसीत् तत्र।

'अस्माभिः यत् चिन्तितं तत् एतया ज्ञातम्' इति आलोच्य ताः पार्वत्याः पादौ गृहीत्वा– ''अम्ब! अस्मान् क्षाम्यतु कृपया'' इति प्रार्थितवत्यः।

तदा पार्वती– ''किमर्थं क्षमाप्रार्थना? वस्तुतः क्षमा मया प्रार्थनीया। भवत्यः एव मम अज्ञानम् अपनीय मयि विवेकं जागरितवत्यः। बहोः कालतः भवतीनाम् इच्छायाः निरोधः कृतः मया। प्रभूतं धनम् अस्ति चेत् अपि कृपणताशृङ्खलया अहं बद्धा आसम्। अद्य सा शृङ्खला छिन्ना। अतः सहोदरगृहं प्रति गमनम् अभिनीय विपणिं गत्वा भवतीनाम् इष्टतमानि खाद्यानि आनीतवती। आतृप्ति खादन्तु। भवत्यः एव एतस्य गृहस्य अलङ्काराः। भवत्यः तृप्ताः चेत् मम पुत्राः तृप्ताः भवन्ति। तदा ममापि तृप्तिः। इतः परं यदा यदा इच्छा भवति तदा अपेक्षानुगुणं खाद्यानि कृत्वा खादन्तु। देवतासर्पकथा तु मया विनोदार्थं कल्पयित्वा उक्ता। वस्तुतः तु गन्धप्रसारिण्यः देवताः भवत्यः। भीकरः सर्पः तु अहम्'' इति उक्तवती।

''तथा न। भवती अस्माकम् अम्बा। देवता एव भवती'' इति साभिमानम् उक्तवत्यः स्नुषाः।






# मीनः अहसत्

काश्मीरदेशे पूर्वं काचित् मीनविक्रयिका आसीत्। सा प्रतिदिनं नूतनान् मीनान् नीत्वा राजभवने दत्त्वा धनं प्राप्नोति स्म। कदाचित् राज्ञी ताम् उक्तवती – "एतेषु मीनः कः मीना का इति सूचयतु। अहम् एकां मीनाम् इच्छामि" इति। तदा कश्चन मीनः उच्चैः अहसत्।

मीनविक्रयिका उक्तवती – "मम समीपे विद्यमानाः सर्वे मीनाः एव" इति।

क्षुद्रजन्तुः मीनः हासम् अकरोत् यत् तेन राज्ञी कुपिता। 'एतत् मम अपमानाय' इति भावयित्वा राज्ञी मीनविक्रयिकां तर्जयित्वा प्रेषितवती, कोपगृहं गत्वा रोदनं कृतवती च।

राज्ञ्याः कोपस्य कारणं ज्ञात्वा राजा मन्त्रिणम् आहूय – "कश्चन क्षुद्रः जन्तुः मीनः राज्ञ्याः पुरतः अहसत् इति श्रूयते। कियत् औद्धत्यं तस्य मीनस्य? केन कारणेन सः एवम् अहसत्? मासाभ्यन्तरे भवता मीनस्य हासस्य कारणं ज्ञात्वा वक्तव्यम्। अन्यथा भवतः मरणदण्डनं भवेत्" इति उक्तवान्।

राजाज्ञां श्रुत्वा मन्त्री दिग्भ्रान्तः। 'राज्ञा उक्तं कार्यं निर्वोढुं न शक्नोमि अहम्। इतः परं मम आयुः मासं यावत्, तावदेव' इति चिन्तयन् सः मनोव्याधिना ग्रस्तः सन् शय्याम् आश्रितवान्।

मन्त्रिणः एकः बुद्धिमान् पुत्रः अस्ति। पितुः मनोव्याधेः कारणं किम् इति ज्ञातं तेन। "भवान् निश्चिन्तः भवतु। अहं मीनहासरहस्यं ज्ञात्वा आगमिष्यामि" इति पितरम् उक्त्वा सः गृहतः निर्गतवान्।

कानिचन दिनानि यावत् तेन प्रयाणं कृतम्। एवं प्रयाणसमये तेन कश्चन कृषिकः मिलितः। कृषिकः मन्त्रिकुमारः च अग्रे प्रयाणं

"काश्मीरीया जानपदकथा"

कृतवन्तौ।

गमनसमये मन्त्रिकुमारः कृषिकम् उक्तवान्- "एवं गमनेन न लाभः। परस्परस्कन्धम् आरुह्य गतं चेत् उभयोः अपि लाभः। एवं ननु?" इति।

कृषिकः किमपि उत्तरं न दत्तवान्। 'एतस्य युवकस्य मतिः भ्रष्टा अस्ति। अतः असम्बद्धं प्रलपति' इति चिन्तितवान् सः।

किञ्चिद्दूरं गमनानन्तरं कर्तनार्थं सिद्धैः सस्यैः युक्तं क्षेत्रं दृष्ट्वा– "एतानि कुतो वा एतावता न खादितानि?" इति उक्तवान् मन्त्रिकुमारः।

कृषिकः इदानीम् अपि किमपि न उक्तवान्। 'एतस्य युवकस्य मतिभ्रान्तिः एव' इति निश्चितवान् सः।

पुनः अग्रे गतवन्तौ तौ। तदा मन्त्रिकुमारः स्वकटौ स्थितं खड्गसदृशीं छुरिकां कृषिकाय यच्छन्– "एतस्याः साहाय्येन अश्वौ आनेतुं शक्यं वा भवता? तथा कृतं चेत् आवयोः प्रयाणे साहाय्यं स्यात्। किन्तु एषा तीक्ष्णा छुरिका तु हस्तच्युता न भवेत्। अमूल्या छुरिका एषा" इति उक्तवान्।

इदानीम् अपि कृषिकः मौनं स्थितवान्। 'असम्बद्धप्रलापिना एतेन सह वार्तालापं करोमि चेत् ममैव हानिः स्यात्' इति तस्य चिन्तनम्।

अरण्यम् अतिक्रम्य तौ नगरं प्राप्तवन्तौ। नगरे कोऽपि एताभ्यां सह वार्तालापं न



कृतवान्। तदा मन्त्रिकुमारः परितः पश्यन्– "अहो, भीकरं श्मशानम् एतत्।" इति उक्तवान्।

कृषिकः एतत् श्रुत्वा हसितवान्।

नगरम् अतिक्रम्य तौ श्मशानसमीपम् आगतवन्तौ। ये मृताः तेषां बान्धवाः निर्धनेभ्यः यात्रिकेभ्यः च विविधानि खाद्यानि पानीयं च यच्छन्तः आसन्। नितरां श्रान्तौ एतौ तैः दीयमानानि स्वीकृत्य खादितवन्तौ। खादनानन्तरं मन्त्रिकुमारः उक्तवान्– "अहो, दिव्यं नगरम् एतत्" इति।

अग्रे यदा गतं तदा काचित् नदी प्राप्ता। कृषिकः पादरक्षे हस्ते गृहीत्वा पादभागस्थं वस्त्रम् उन्नीय नदीक्रमणं कृतवान्।



मन्त्रिकुमारः तु तथा किमपि अकृत्वा एव नदीक्रमणं कृतवान्।

ततः तस्य कृषिकस्य ग्रामः प्राप्तः। 'एषः असम्बद्धप्रलापी चेदपि बहुदूरं यावत् मया सह प्रयाणं कृतवान्' इति आलोच्य कृषिकः मन्त्रिकुमारम् उक्तवान्– ''एषः मम ग्रामः। भवान् मम गृहे भोजनं कृत्वा अग्रे गच्छतु'' इति।

तदा मन्त्रिकुमारः उक्तवान्– ''भवतः गृहम् आगन्तुम् अहं सिद्धः एव। गृहस्य अन्तर्भागः सम्यक् अस्ति इति निश्चित्य आहूतं चेत् अहम् आगच्छेयम्'' इति।

'एतेन वार्तालापः एव दोषाय' इति स्वगतं वदन् कृषिकः स्वगृहं गतवान्। मन्त्रिकुमारः तत्रैव वृक्षस्य अधः उपविष्टवान्।

कृषिकः गृहं गत्वा मार्गे प्रवृत्तं समग्रं पत्नीं पुत्रान् च उक्त्वा– ''मतिभ्रान्तः युवकः सः'' इति वदन् हसितवान्।

कृषिकस्य एका पुत्री। सा चतुरमतिः। सा पितुः वचनं श्रुत्वा उक्तवती– ''तात! भवता यथा चिन्तितं तथा सः असम्बद्धप्रलापी न। मतिभ्रान्तः अपि न। तीक्ष्णमतिः सः। तेन यत् उक्तं तस्य तात्पर्यं ज्ञातुं भवता न शक्तं, तावदेव। परस्परस्कन्धारोहणं नाम परस्परं कथाकथनम्। कथाकथनपूर्वकं प्रयाणं कृतं चेत् मार्गायासः परिहृतः भवेत् खलु? अतः तेन तथा उक्तम्।''

''समृद्धं सस्यं दृष्ट्वा तेन उक्तम्- इतोऽपि एतानि कुतो वा न खादितानि इति। एतस्य तात्पर्यम् – 'एषः फलोपचयः ऋणदातृभिः न वशीकृतः इति तु आश्चर्याय' इति। सामान्यकृषिकाः ऋणभारं वहन्तः एव जीवन्ति इत्यतः तेन तथा उक्तम्। छुरिकां दत्त्वा 'अश्वद्वयम् आनयतु' इति कथयतः तस्य तात्पर्यम् आसीत् यत् दृढं दण्डद्वयम् आनेतव्यम् इति। अरण्ये प्रयाणसमये दण्डस्य आवश्यकता महती इत्यतः तेन तथा उक्तम् आसीत्। नगरे श्रान्ताभ्यां भवद्भ्यां सह कोऽपि वार्तालापं न कृतवान् इत्यतः तेन उक्तम्– एतत् श्मशानम् इति। श्मशानसमीपे आहारः पानीयं च कैश्चित् दत्तम्। अतः तेन उक्तम् – एतत् दिव्यं नगरम् इति। अज्ञातायाः नद्याः तले किम्

अस्तीति न ज्ञायते इत्यतः तेन नदीक्रमणसमये पादरक्षा न अपनीता। विषजन्तूनां दंशनं न स्यात् इति उद्देशेन तेन वस्त्रं न उपरिकृतम्। गृहस्य अन्तर्भागः सम्यक् अस्ति वा इति ज्ञात्वा आह्वातव्यम् इत्यस्य तात्पर्यं – गृहसदस्यानाम् अनुमतिं प्राप्य आह्वातव्यम् इति। असमये अतिथिना सह गतं चेत् गृहसदस्याः कुपिताः भवेयुः इति आलोच्य तेन तथा उक्तम्। एतादृशस्य बुद्धिमतः सत्कारः अस्माकं धर्मः। एतम् अहं योग्यं सत्करिष्यामि'' इति।

अनन्तरं कृषिकपुत्री लघुपात्रमितं घृतं, द्वादश रोटिकाः, चषकमितं क्षीरं च कर्मकरस्य हस्ते दत्त्वा, ''मित्र! चन्द्रः परिपूर्णः, वर्षे द्वादश मासाः, समुद्रः तीरम् उल्लङ्घयितुम् उद्युक्तः अस्ति। एतत् आतिथ्यं स्वीकरोतु कृपया'' इति चिटिकायां लिखित्वा 'एतानि सर्वाणि वृक्षस्य अधः स्थिताय मन्त्रिकुमाराय दत्त्वा आगच्छतु' इति उक्त्वा कर्मकरं प्रेषितवती।

कर्मकरः यदा गच्छन् आसीत् तदा मार्गे तदीयः पुत्रः मिलितवान्। पितुः हस्ते स्थितम् आहारं दृष्ट्वा रोदनं कृतवान् सः। क्षीरं पीत्वा एकां रोटिकां घृतं च स्वीकृत्य एव ततः गतवान् सः। कर्मकरः आहारवस्तूनि चिटिकां च मन्त्रिकुमाराय दत्तवान्।

मन्त्रिकुमारः आहारपदार्थान् खादित्वा कृषिकपुत्र्या लिखितां चिटिकां पठित्वा



कर्मकरद्वारा एवम् उत्तरं प्रेषितवान्– ''अमावास्याकारणतः चन्द्रः अस्पष्टं दृष्टः। वर्षे एकादश एव मासाः इति भावना आगता मम। समुद्रः क्षीणः आसीत्। कारणं न ज्ञायते'' इति।

कर्मकरेण आनीते पत्रे लिखितं पठित्वा तं पृष्टवती कृषिकपुत्री– ''मया दत्तं घृतम्, एकां रोटिकाम्, अर्धं क्षीरं च किं कृतवान् भवान्?'' इति। भीतः कर्मकरः स्वपुत्रेण कृतं निवेद्य अश्रूणि स्रावयन् क्षमां प्रार्थितवान्।

अनन्तरं कृषिकः वृक्षसमीपं गत्वा मन्त्रिकुमारं स्वगृहम् आनायितवान्। कृषिकपुत्री मन्त्रिकुमारः च सुदीर्घकालं यावत् वार्तालापं कृतवन्तौ। अन्ते मन्त्रिकुमारः राजभवने मीनेन कृतं हासं, तत्कारणतः

मन्त्रिणः उपरि आपतितं कष्टं, स्वप्रयाणस्य उद्देशं च विस्तरेण निवेद्य– "मीनस्य हासस्य कारणं किम् इति भवती किमपि वस्तुं शक्नुयात् वा?" इति पृष्टवान्।

"महाराजस्य अन्तःपुरे कश्चन पुरुषः प्रविष्टः अस्ति। सः स्त्रीवेषेण तिष्ठति इत्यतः तस्य स्थितिं कोऽपि न जानाति। एतत् ज्ञात्वा एव मीनः अहसत्" इति उक्तवती कृषिकपुत्री।

एतत् श्रुत्वा आश्चर्यं प्रकटयन् मन्त्रिकुमारः– "एतं विषयं प्रमाणीकर्तुं शक्नुयात् वा? मम पितरं मरणदण्डनात् रक्षयेत् वा भवती?" इति पृष्टवान्।

कृषिकपुत्री एतत् अङ्गीकृतवती। मन्त्रिकुमारेण सह राजधानीं गतवती च। कृषिकपुत्र्या उक्तं श्रुत्वा मन्त्री नितरां सन्तुष्टः। सः राजानं मीनहासकारणं निवेदितवान्।

"पुरुषः अन्तःपुरं प्रविष्टः इत्यस्य विषयस्य निरूपणं कथम्?" इति पृष्टवान् राजा।

"नगरसमीपे विशालः गर्तः करणीयः। महाराज्ञ्याः सर्वाः परिचारिकाः आज्ञापनीयाः यत् गर्तः उल्लङ्घनीयः इति" इति सूचितवती कृषिकपुत्री।

राज्ञा तथैव व्यवस्था कृता। राज्ञ्याः सर्वाः परिचारिकाः गर्तस्य समीपम् आगत्य मौनं स्थितवत्यः। काऽपि उल्लङ्घनार्थं न उद्युक्ता। एका केवलं धैर्येण गर्तस्य उल्लङ्घनं कृतवती।

"एषः स्त्रीवेषधारी पुरुषः। परीक्ष्य जानन्तु तावत्" इति उक्तवती कृषिकपुत्री।

परीक्षणात् तदीयं पुरुषत्वं प्रमाणितम् अभवत्। वञ्चकस्य वञ्चना प्रकटिता अभवत् इत्यतः राज्ञी सन्तुष्टा। 'मम अज्ञानं दृष्ट्वा एव मीनेन हसितम्' इति ज्ञातवती सा।

स्त्रीवेषधारी पुरुषः कारागारे स्थापितः, योग्यं दण्डितः च। महाराजः मन्त्रिणे उपायनानि दत्त्वा सत्कृतवान्। मन्त्रिकुमार-कृषिकपुत्र्योः विवाहः सवैभवं सम्पन्नः।





## अतिलघुः राक्षसगोधिका

'डिनोसार्' इति ख्याताः राक्षसगोधिकाः सर्वाः महाकारिकाः एव भवन्ति इति न। एतासु अल्पाकारिकाः अपि भवन्ति। पक्षिणी इव दृश्यमानायाः अल्पायाः राक्षसगोधिकायाः दैर्घ्यं २ द्वादशाङ्गुलमात्रम्।

## अव्यक्तः अपायः



समुद्रे प्लवमानानां हिमपर्वतानां जलस्य च सान्द्रता प्रायः समाना भवति। अतः समुद्रे प्लवमानस्य हिमपर्वतस्य अष्टभागेषु सप्तभागाः जले निमग्नाः एव तिष्ठन्ति।

## कण्टकभक्षणप्रियाः जीविनः

गैलापगोसुद्वीपेषु विशिष्टजातीयाः जलनकुलाः निवसन्ति। ते कण्टकमयानि सस्यानि सकण्टकम् एव खादन्ति।



# कश्चित् आगतः आसीत्

| | | |
|---|---|---|
| I - | अद्य भवन्तं द्रष्टुं श्यामप्रसादः आगतः आसीत्। | One Mr. Shyamprasad was here today to see you. |
| II - | कः श्यामप्रसादः? | Shyamprasad! Who could it be? |
| I - | दीर्घकायः, उपनेत्रधारी ...... | He is tall and wears glassess. |
| II - | सः कुतः आगतवान् इति भवान् पृष्टवान् वा? | You asked him from where he came? |
| I - | सः देहलीनगरात् आगतः। देहलीनगरे सम्मेलने भवतः परिचयः प्राप्तः इति तेन उक्तम्। | He is from Delhi. He said he had met you there in some conference or so. |
| II - | तेन कोऽपि सन्देशः दत्तः वा? | Has he left any message? |
| I - | 'श्वः सायं पञ्चवादने पुनः आगत्य मेलिष्यामि' इति उक्त्वा गतः सः। | He just said he would meet you tomorrow evening at 5 O'clock and went away. |
| II - | श्वः प्रातः एव मम इतः निर्गमनं, दिनत्रयानन्तरं प्रत्यागमनम्। एतत् भवान् तं न सूचितवान् वा? | But I am going out of station tomorrow morning and will be back only after 2-3 days! You didn't tell him? |
| I - | भवतः प्रवासकार्यक्रमः मया विस्मृतः आसीत्। | I forgot your tour programme. |
| II - | सङ्केतः दूरवाणीसङ्ख्या वा स्वीकृता वा? | You took his address or telephone number? |
| I - | न। | No, I didn't. |
| II - | यदा अपरिचितः आगच्छति तदा तस्य सङ्केतः दूरवाणीसङ्ख्या वा अवश्यं स्वीकरणीया। अन्यथा क्लेशः। पश्यतु इदानीम्। सः कः इति अहं न ज्ञातवान्। तस्य मेलनं कर्तुम् अपि न शक्नोमि। | See, whenever a stranger comes, you have to take his address or telephone number. Otherwise it will be a problem. I cannot recollect who he is and I cannot also meet him ! |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां डिसेम्बर्-९१ मासे प्रकटयिष्यामः।



S. B. Takalkar



Manjula

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अक्टोबर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावूमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'अगस्ट्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—**

प्रथमचित्रम् - **हस, खाद त्वं स्वादुफलम्।**

द्वितीयचित्रम् - **किं पश्यसि रे, काककुलम्।**

प्रेषकः - श्री अवनीन्द्र वात्स्य, १३४२-ए/२९, फरीदाबाद (हरियाणा)




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

असदृशः - Incomparable
असम्बद्धम् - Irrelevent
आह्वातव्यम् - One who should be invited
इङ्गितम् - Intention
उलूकः - Owl
उष्णीषः - Turban
कण्टकम् - Thorn
कण्डोलः - Basket
कृत्रिमः - Artificial
गुल्मः - Bush
घर्मः - Heat
चञ्चा - Scarecrow
चुल्ली - Stove
छुरिका - Knife
छेत्तुम् - To cut
तायकम् - Talisman
दासः - Slave
नकुलः - Mungoose
पुटकम् - Packet
पोलिका - A sweet dish
प्रतिस्पर्धी - Rival
प्रस्तावना - Introduction
प्रहृत्य - Having beaten
भल्लातकम् - Cashewnut
भाटकम् - Rent
महानौका - Ship
मीना - Fish
रज्जुः - Rope
वणिक् - Merchant
वर्तिका - Wick of a lamp
विधूय - Having shrugged
शकटम् - Cart
शिथिलम् - Loosened
षीष्कारः - Whistle
सङ्केतः - Sign
सघोषविक्रयणम् - Auction
संयमः - Restraint
सान्द्रता - Density
स्कन्धः - Shoulder
हलः - Plough

* * * * *

